कालीकुमारग्रन्थमालायास्त्रयोदशं पुष्पम् ।

# गल्पकुसुमाञ्जलिः

## ( द्वितीयखण्डस्य द्वितीयो भागः )



लेखकः—

श्रीनारायणशास्त्रिखिस्ते साहित्यवारिधिः

सम्पादकः—

पं० कालीप्रसादशास्त्री



प्रकाशकः—

[illegible]तकार्यालयः, अयोध्या

प्राप्तिस्थानम्—

अमरभारतीकार्यालयः; बांसफाटक; काशी

१।३।४५ ई० }
[illegible], संस्कृताब्दः }

मूल्यमष्टाणकाः

* जय दुर्गे *

# ...ल्पकुसुमाञ्जलिः

द्वितीय खण्डस्य द्वितीयो भागः ।

...नादनूपुरध्वानैः श्रुतयः श्रुतिमागताः ।
...स्पन्दमानं मणिद्वीपे ध्याये दौर्गम्महोद्भुतम् ॥

कालीकुमारतनुजो बुधवृन्दवन्द्यः;
फूलाङ्गजो जयति संस्कृतलोकभानुः ।
कालीप्रसादसुकविर्जगदम्बिकायाः;
पादेषु गल्पकुसुमाञ्जलिमातनोति ॥



## दरबारी

सा नि सा, ध नि पा, म प ध, नि नि सा, रे प ग, म रे सा इति स्वरैस्तानसेनो दरबार्या आलापं करोति स्म । अर्धरात्रिर्भाविन्यासीत् । सम्राडकबरो निद्रा-देव्याः क्रोडे क्रीडनं करोतिस्म । लाहौरस्य दुर्गे नीरवतायाः साम्राज्यमासीत् । कुत्रचिदेकोऽपि शब्दो नासीत् ।

राजसभायाः सम्मुखे, उद्यानस्य द्वितीये भाग आसी ल्लघुः प्रासादः । एतदुपरिभागस्यैकस्मिन् स्थले फारसस्य स्फीतः कालीन आस्तृत आसीत् । अस्योपर्याच्छादितमासीदेकं दुग्धश्वेतमास्तरणम् । श्वेतचन्द्रिकायामिदं विद्योतते स्म । अस्मिन्नेवासीनस्तानसेनः स्वकीयां दरवारीमालपति स्म ।

समस्ता स्तब्धा प्रकृतिस्तस्या रागिन्याः श्रवण आसीन्निरता । वायुर्विश्रान्त आसीत् । कमलन्नेत्रं निमील्य तन्मयं तद्गानं शृणोति स्म । समस्ताः पुष्प-पादप-लतादयो जोषमवलम्ब्य गानं शृण्वन्ति स्म । मुग्धस्य तानसेनस्याङ्गुलयोऽपि विश्रान्तिमभजन् । तानपूरावाद्यं तस्य हस्ते निःस्पन्दमासीत् । दरवार्याः स्वरेण समस्तं राजभवनं मुखरितमासीत् ।

स्वरे मार्दवमासीत् किन्तु वेदनापूर्णम् । तानसेनस्य कण्ठ एव वेदनापूर्ण आसीत् । तत्रापि प्रेमपूर्णा, व्यथोत्पादिनी, सरसा दरवारी ! पञ्चमादाकृष्टेन गान्धारेण शाहजादी शर्वरी वलात् पर्यङ्कादाकृष्टा तथाऽऽकृष्टानि तस्या नेत्रेभ्योऽश्रूणि । आकाशोऽपि रोदनपरायण आसीत् । तस्याअश्रूणि निम्नभागे वर्तमानेषु घासेषु पुष्पेषु च पतन्ति स्म । ताराभिः सह चन्द्रोऽपि मन्दगतिर्गानं शृणोति स्म । सर्वत्र निस्तब्धता जागर्ति स्म ।

शाहजादी वातायने स्थिता आसीत् कपाटद्वयमाश्रित्य । तस्या नेत्राभ्यां झरझराश्रु वृष्टिर्भवति स्म । अयमासीत् प्रभा-

वशानसेनस्य दरबार्यां । सा तस्यामेवाशायामासीद् दत्तदृष्टि-र्यस्यां तानसेनस्यासीत् प्रासादः ।

अस्यां चन्द्रिकाच्छन्नायां शर्वर्यां शाहजादी शर्वरी मूर्तिमती सुन्दरतेव प्रतिभासते स्म । मन्त्रमुग्धेव सा तत्र न ज्ञायते कियत्कालावधि स्थिता । रात्रियौवनश्रीरिवासीद् गमन-परायणा । तानसेनस्य स्वरो रोदनं करोति स्म तथा शाह-जादी शर्वरी ।

[ २ ]

रजततश्तर्यां ताम्बूलद्वयस्य वीटीं संस्थाप्य सेविका तान-सेनस्य सेवायामुपस्थिताऽभूत् । अनया वीट्या सहैवासीत् सन्दे-शः शर्वर्या यद् भवता मह्यं गानशिक्षणं देयम् । तवाहं शिष्या बुभूषामि ।

इयं वार्ता द्विदिनपूर्वतनी । तानसेनः शनैश्शनैः परि-भ्रमन्नन्तःपुरप्रासादपर्यन्तं गत आसीत् । चतुर्दशवर्षीया शाह-जादी त्वरया वातायनद्वारमुद्घाट्य निम्नभागे भ्रमन्तं तान-सेनं ददर्श । तस्य सुदृढ शरीरं, समुन्नतं श्मश्रु, बृहती नेत्रे, प्रोन्नतं विशालं ललाटं, हिन्दुत्वचिह्नानि च दृष्ट्वा शर्वरी हृतप्रभेव तस्थौ चकितचकिता ।

शर्वर्या माताऽऽसीदेका हिन्दुबाला या परैश्वर्यलुब्धेन केनचिद् तद्बन्धुकेण मुसल्मानायार्पिता । तस्या रक्तमासीच्छ-

वैर्याम् । सा हिन्दुयुवकं कञ्चिद् दिदृक्षतिस्म । तदर्थं सा त्रिकलेव तिष्ठति स्म । आः हिन्दुत्व ! तानसेनमत्रलोक्य तस्याः सा भावना प्रबलाऽभवत् मुगलान्तःपुरे विविधविलासैर्विकसितायाः शर्वर्या हृदये शैशवशृङ्खलया बद्धो वासनाग्निः प्रचण्डं धगिति कृत्वा प्रजज्वाल । सहसा वातायनात् पपातैकः स्वर्णचम्पको — झनझनायमानः ।

तानसेन उपरि दृष्टिं चकार । कल्याभङ्गरञ्जितामेकां कुरतामाजानुलम्बितामाच्छाद्य चन्दनरञ्जितेव कोमला शाहजादी शर्वरी तेन दृष्टा । तस्या रक्तकर्णौ ओष्ठोऽतिमन्दं कम्पते स्म । नेत्रेषु मदिराया मदो व्याप्त आसीत् । तानसेनस्य दृष्टिः पपात । स एकां पाटलकलिकामवलोकयाञ्चकार । द्वितीयश्चम्पकः पुनरपि पपात तथैव । तृतीयोऽपि पपात क्रम इति ।

तानसेनः पुनरपि तां ददर्श । अस्मिन्नवलोकने त्रिशतान्धीनता चासीत् । सः स्वस्थानाच्चचाल । शाहजादी ज्ञातवती मदयमन्तः पुरं दुर्गमं मत्वा स्वमसमर्थमिव मनुते । सा भृशमुच्चैर्जहास । अद्य शर्वर्या सन्देशः प्रहितो वीटिकाद्वयेन सह यदहं त्वदीयां शिष्यतां कामये ।

स्वामिभक्तस्तानसेनो वीटिकाद्वयं परावृत्य सन्देशं प्रहितवान् तानसेनोऽकबरबादशाहस्यावरणवर्तिनीभिः प्रासाद-

सहिलाभिः समं सम्बन्धं न स्थापयितुमिच्छति ।

सेविका परावर्तनञ्चकार । शर्वर्याः पिपासा वृद्धिमाप ।

बहूनि वर्षाण्यतीतानि । दानियालाय, मुरादाय च तानसेनः शिक्षां ददाति स्म । तानसेन आभ्यां स्वकीयां सर्वां कलां शनैः शनैरर्पयति स्म । स कामयते स्म यत् तन्मृत्योरनन्तरमपि कश्चित् तस्य शिक्षाया विस्तरं विदध्यात् । इमौ द्वावपि यद्यपि तस्य सर्वविद्यामधिगतवन्तौ किन्तु करुणादरवार्यां गानेऽसमर्थावेव जातौ । मधुरया विकृते कण्ठे सा नासीन्निम्नोन्नता लहरी । स भावः कासीत् ? ता व्यथाभरिता मीड़ाः, कम्पतामानाः, पञ्चमाकृष्टो गान्धारः, इमानि सर्वाणि वस्तूनि तानसेनस्यैवासन् । अन्यस्मिन् कण्ठे सा वेदना, प्रणय भावेन सह कासीत् ? तानसेनो भृशमासीद् दुःखितो यत् तदनन्तरं दरवार्या अन्तो भविष्यति ।

[ २ ]

सप्तवर्षाण्यतीतान्यन्यान्यपि । आसीदर्धरात्रिसमयः । तानसेनोऽन्तिमघटिकानां संख्यानं करोतिस्म । समस्तदीपास्तमस्तोऽभूत् । अन्धकारायैव मार्गमवबोधयितुं यथा एक एव शमादानो विद्योततेस्म । तानसेनः स्वकीये प्रासादे मसनदमाश्रित्य शेतेस्म । अकबरो, दानियालो, मुरादश्च स्थिता आसन्, अद्य गुरोर्महायात्राऽऽसीत् ।

एषु बहुवर्षेषु शर्वर्या अतृप्ता वासना श्रान्तिमाप्य प्रेमिण

परिणताऽऽसीत् । सा तानसेने स्नेहं करोति स्म । तस्य प्रत्य कवस्तुषु तत्प्रेमाऽऽसीत् । तस्य दरबार्यां सा परमाऽऽसक्ताऽऽसीत् ।

शाहजादी श्रुतवती यद् गुरोरन्तिमः समय आगत. । तस्या हृदयमभूद् विदीर्णम । सा सर्वतोऽन्धकारमपश्यत् । कम्पिताभ्यां पद्भ्यां सा वातायनान्तिकमाजगाम । सा तानसेनस्य प्रासादमवलोकते स्म । नेत्राभ्यामश्रूणि पतन्ति स्म । सा हृदयस्य वेदनावरोधनेऽसमर्थाऽभूत् । अथ सहसैव दुःखेन, वेदनया च पूर्णा दरबारीरागः कण्ठाद् विनिर्ययौ ।

तानसेनस्य मलिनं नेत्रज्योतिर्भूयो विकासमाप । शुष्कयोरोष्ठयोरुपरि स्मितरेखा खचिता तस्य प्रियां दरबारीं कश्चिद् गायति स्म । सैवासीद् व्यथा, स एव मीडः, स एव पञ्चमाकृष्टो गान्धारः । सः सम्राजः क्षमायाचनञ्चकार । सर्वान् विससर्ज । अधुनायमेकाकिनीं कामयते स्म ।

तानसेन आसीदेकाकी । स नेत्रोन्मुक्तवान् यद् गायकस्याह्वानं क्रियताम् । शनैर्द्वारोद्घाटनमभूत् । तानसेनो नेत्रे प्रसार्य ददर्श यत् साऽऽसीत् शाहजादी शर्वरी । स उत्थितो भवति स्म । शाहजादी तदन्तिके पपात । तानसेनस्य स्वरः प्रकम्पित आसीत्—शर्वरि ! क्षम्यतां मया भ्रान्तिः कृता । कण्ठावरोधोऽभूत् स पुनरुवाच—शर्वरि ! अथाहमतितुष्टो

ऽस्मि । अथ मे मृत्युः प्रसन्नतया भविष्यति । मदीयमृत्योरनन्तरं त्वं दरबारीं समुज्जीवितां रक्षिष्यसि ।

गुरो ! अन्तिमे समये तु मदीया शिष्यता स्वीकरणीया । शाहजादी रोदनं करोति स्म क्रियतां गायनमहं त्वया सह गानं करिष्यामीत्युक्तवतस्तानसेनस्य कण्ठो रोदनञ्चकार ।

खरज-पञ्चमारूढा दरबारी समानाभ्यां कण्ठाभ्यां निःसृत्य जनाँश्चकितचकिताँश्चकार । सर्वे गुरुकौशलम्मन्यमाना अश्रुभिः शोकार्तहृदयस्य सन्तर्पणं कुर्वन्ति स्म । समस्ते संसारे साम्प्रतं शोकसाम्राज्यमासीत् ।

---

# त्यागराजः

खिस्तस्य षोड़शशतकादारभ्य १८ खिस्तशतकं यावद्भारते सहसा भक्तिसागरः समुद्वेल्लितः । अस्मिन् निमज्योन्मज्यानेके भारतीयाः कृतार्था अभवन । तेषां कथा वाण्यश्चाधुनापि तत्तत्प्रान्तेषु गीयन्ते उत्तरभारते यथा तुलसी, सूर, मीरादिपदानां, महाराष्ट्रे तुकारामादिगीतानां, गुर्जरसौराष्ट्रकच्छादिषु च यथा नरसीमेहताकीर्तनानां, विहारे विद्यापतिरचनानां ध्वनिभिर्जनता गतकल्मषाऽभूत् तथैव दक्षिणभारते

त्यागराजगायनानाम् । दक्षिणभारतेऽत्रापि तामिलभाषाविद्स्त्यागराजस्य गायनानां गानं कुर्वन्ति ।

मद्रासप्रान्तीयतञ्जौरमण्डलस्य तिरुयालूरनामके ग्रामे खिस्तस्य १७६५ शतके त्यागराजस्य जन्म ब्राह्मणकुलेऽभूत् । अस्य पिता रामब्रह्ममहोदयः परमश्रीकृष्णभक्त आसीत् त्यागराजस्य । ज्येष्ठो भ्राता दुर्व्यसनी बभूव । अस्य पिता समये भुवं तत्याज । उभौ भ्रातरौ विभक्तौ बभूवतुः । त्यागराजस्योपरि पितुः प्रभाव आसीदतो वस्तुविभागसमये ज्येष्ठभ्रात्रा दत्तं स्वल्पमपि वस्तुजातं स्वल्पगृहसहितं जग्राह । पितुरन्तिके श्रीकृष्णस्यैका स्वर्णमूर्तिरासीत्प्रतिदिनपूजनीया । तामपि त्यागराज एव प्राप यतः स आसीन्मूर्तिपूजकः । अयं तस्या पूजन एव कालं यापयति स्म । अनेन पूजनेन स ग्राममान्योऽभूत् । ज्येष्ठभ्राता कुकृत्येषु सर्वसम्पत्तेर्व्ययं कृत्वा विचारयामास यत् स्वर्णमूर्तिपूजनेनाधिगता प्रतिष्ठाऽस्य हीना स्यात्ततो मत्तुल्यो भूत्वा जनताकृतस्य अपमानस्यार्द्धांशमादाय क्षीणभारं मां करिष्यतीति विचार्य तां श्रीकृष्णमूर्तिं त्यागराजात् प्रसह्याकृष्य कावेर्यां चिक्षेप । त्यागराज उन्मत्तो यथा कावेर्या जले पपात किन्तु न ममार । दिवानिशमथानशनं कृत्वा स मूर्तेरन्वेषणं करोतिस्म किन्तु सा न हस्त आगता । एकदा जले प्राणविसर्जनप्रतिज्ञां कृत्वा यदैव पतितुमियेष तदैव ददर्श यन्मूर्तिस्तट एक विद्योतते । स तां प्रतिज्ञां विसृज्य मूर्तिचरणे

विलुण्ठनञ्चकार। अथ मूर्तिं प्राणेभ्योऽपि गरीयसीमादाय गृहं हित्वा च स विचरणपरायणोऽभूत् इत्थं समस्ते मद्रासे ऽस्य सेवका अभूवन् किन्त्वयं केवलं, भैक्ष्यं चरति स्म।

एकदा तञ्जौरनृपतिः सर्वजी त्यागराजस्यान्तिके दूतं प्रेषयाञ्चकार स तमुक्तवान्—भगवन्! भवतां गानं महाराजः श्रोतुमिच्छति। स प्रसन्नो भवतेऽनन्तद्रव्यं दास्यति-येन संसारः सुखपूर्वकं चलिष्यति। इमां दूतस्य वाणीमाकर्ण्य त्यागराजः कथितवान्-दूत! वक्तव्यो महाराजो गानं द्रव्यलाभाय न किन्तु भगवत्तोषाय क्रियते यदि धनेनैव सुखं भवति तदा श्रीकृष्णस्य स्वर्णमूर्तिर्मम्मान्तिके वर्तते। अस्मिन विषये प्रसिद्धं त्यागराजस्य गीतं चेतांस्यानन्दसागरे निमज्जितानि विदधाति।

एकदा ट्रावन्कोरनृपतिः प्रसिद्धं वेहालावादकं 'वदिवेलु' त्यागराजस्यान्तिके प्रहितवान। स तदन्तिके गत्वा कथितवान्—भगवन्! महाराजो वदति यदेकदा महाभागवतैर्भवद्भिरागत्य जनता गानैः कृतार्थीकरणीया। स कथितवान् समयं सम्प्राप्य तदिच्छापूर्त्यै चेष्टां करिष्यामि। इदानीमेव वदिवेलुनायमुक्तो यत्तत्रावश्यमागन्तव्यम्। जनानामुपकारोऽपि भविष्यति भवतां सत्कारश्चापि यशसा सह। त्यागराजः कथितवान् यशःसत्कारौ राजदत्तौ यदि भविष्यतस्तदा श्रीकृष्णस्वर्णमूर्तिपूजनाधिगतौ यशःसत्कारौ किं व्यर्थौ ? माहं यशः

सत्काराभिलाषी वक्तव्योऽतो महाराजो यदहं नागमिष्यामि।

त्यागराजस्य गीतानि न केवलं कल्पनाकलितान्येव किन्तु सत्यान्यपि। तामिलदेशीया वदन्ति यद् भजनपूजन,जपयोगादिभिः प्रत्यक्षीकृतं वस्त्वेव तेषु विद्यते। एषु श्रीकृष्णः 'प्राणनाथ, विग्न' नामभ्यां तथा हनुमान् 'पाहिरामदूत' नाम्ना च प्रकटितो वर्तते। अयमेषां गानं दिवानिशं करोति स्म। असौ कीर्तनभक्तेषु गणनीयः। अयमासीच्छ्रीकृष्णस्य परमभक्तः। भगवन्तं विसृज्य कस्मिंश्चिदपि कार्ये न संलग्नो भवति स्म। भिक्षां कृत्वा जीवनयापनं कुर्वन्नप्ययं कदाचिदपि धनिनां मुखावलोकनं न करोति स्म। अस्य गीतानि जडेष्वपि रसं सञ्चारयन्ति पञ्चदेवोपासनापरकानि तामिलभाषायाम्।

एकदायं स्वप्ने ददर्श यदेकः पुरुषो वदति दशदिनेषु त्वं वैकुण्ठं गमिष्यसि। अयं ८८ वर्षावस्थायां सहसा ज्वराकुलोऽभूत्। दशमदिने कावेर्या उत्तरेऽनेनानन्तजनानां जयजयविरावैः सह पाञ्चभौतिकं शरीरं त्यक्तम्।



# दिव्यदृष्टिः

त् कोऽपि पाखण्डी, ईदृशा बहवो धूर्ता द्रव्यमर्ज- “स्या यितुं साधुवेषं बिभ्रति लोकान् वञ्चयन्तो विह- रान्त चेतस्ततः !!’ ‘न हि, इदमेवैकं वैशिष्ट्यं तस्य पाखण्डितायां सन्देहं जनयति स कुतोऽपि द्रव्यं न गृह्णाति किंबहुना द्रव्यं स्पृशत्यपि न स, केवलं भोज्यवस्तू- न्येव स गृह्णाति तान्यपि न सञ्चिनोति स्वोदरपूरणपर्याप्तानि संस्थाप्य ततोऽधिकानि भिक्षुकेभ्यो विभज्यार्पयति ।”

“किं तस्य वक्तव्यमस्ति, स आत्मनि कं वा विशेषगुणं ख्यापयति ?

“कमपि न, स आत्मनः किमपि वैशिष्ट्यं न कथयति, तथाऽपि भविष्यद्वक्ता त्रिकालदर्शी सिद्धोऽस्ति, लोकानां मनो- गतमशेषं, बोद्धुं शक्नोति । असाध्या अपि रोगास्तस्य कर- स्पर्शादेव सद्यो नश्यन्ति । तेन यस्मै यद्वरदानं दीयते तदवश्यं पूर्णं भवति ।”

“तस्यैते विशेषगुणा सन्ति केनाऽपि परीक्षिताः ?”

“तैरसंख्यैः सज्जनैः, ये तं परिवार्य तिष्ठन्तः शतशः प्रश्नान् पृच्छन्ति, विविधान् स्वमनोरथान् तस्य पुरः प्रकटयन्ति च ।”

'स च नाधिकं भाषते केनापि। न च लोकानां पुर आत्मानं सविशेषं प्रदर्शयति। केनापि तस्य भक्तेन गङ्गाकूले तदर्थमेका कुटी निर्मापिता वर्तते, तत्रैव स सन्ततं निवसति। केवलं प्रातरष्टमहोरात एकादशहोरापर्यन्तं होरात्रयमेव स लोकेभ्यो दर्शनं ददाति। तावत्यवसर एव यः कोऽपि यत्किमपि पृच्छति, तदुत्तरं तेन दीयते।"

अपराह्णसमय आसीत्तदानीम्, अहं मम सुहृदो मेघश्यामस्य गोष्ठीगृहे विशाले वेत्रासनेऽर्द्धशयान आसम्।

मम पार्श्ववर्ति उद्यानोपगं वातायनं विवृतद्वारमासीत्। जलधारासमुच्छ्वसितभूसुरभिपरिमलेन सह समागच्छन् सुरभिकुसुमामोदो वाढं मदयतिस्म मे मानसम्। गोष्ठीगृहे तदानीमावां द्वावेव स्थितावभूव।

मयोक्तम्—"सखे! मेघश्याम! त्वं ऋजुरसि न जानासि वञ्चकानिमान्। इयमेषां वञ्चनाचातुरी, स खलु वञ्चकः केनाप्युपायेन लोकानां मनोगतमर्थं विदित्वा तेषां पुर आत्मनस्त्रिकालदर्शित्वं नाटयति। यदुच्यते, स लोकेभ्यो वरदानं ददाति, रोगिणां रोगांश्च दूरीकरोतीति, तच्छ्रद्धानडानां विश्वासमयिष्ठताविजृम्भित मात्रमेव। गभीरेण विश्वासेन दुस्साध्या अपि व्याधयो दूरीभवन्ति! उत्कटा बहवो मनोरथा अपि विश्वासमात्रेणैव पूर्यन्ते। यदि तस्मिन् वास्तविकी कापि लोकोत्तरा

शक्तिरभविष्यत् स कदापि लोकालये जनसम्मर्दमध्ये निवासं नाकरिष्यत्। तस्य तु निर्जनं वनमेव समुचितं स्थानम्, यत्र मनुजगन्धोऽपि न भवेत। मेघश्यामोऽब्रूत–"एकदा केनापि-ऽपि तस्मै पृष्टमासीत्–"भगवन्! शान्तिमयमात्मन एकान्त-स्थानं परित्यज्य लोकालयेऽस्मिन् किमर्थमागतं भगवता ?" इति। स चाऽत्यन्तगभीराकृतिरपि प्रसन्नवदनो लक्ष्यते। रोषकषायितः स नाद्यापि केनापि दृष्टः। प्रष्टारस्तु विविधान् कुटिलाननुचितानपि प्रश्नान् तन्वते, परन्तु तस्य महात्मनो वदने तैरनुचितानुयोगैरेकाऽपि लघीयस्यपि विकारलेखा न दृग्गोचरीभवति। तथाविधेऽवसरे स केवलं तूष्णीमास्ते वचसा न किञ्चिदप्युत्तरयति। लोकालयागमनहेतुं पृच्छते सज्जनाय तेनेत्थमुत्तरितम्—"वत्स! भगवदिच्छैवास्माकं प्रेरिका शक्तिः तद्वशंवद एवाहमत्रागतोऽस्मि। विचारितं च चेतसि–कार्तिके ऽस्मिन् पुण्यमासे गङ्गास्नानार्थं काश्यां गङ्गातीरे वसतिः कर्त-व्येति। अतीते चास्मिन् मासे स्थानमिदं परित्यज्याऽन्यतो ग-न्तव्यं भवेदिति सम्भावयामि।"

सोत्कण्ठं मयाऽप्राच्छि—त्वया सर्वमिदं कथमवगतम्? किं तत्र ज्ञानपरिचयः कश्चित्सज्जनस्तदन्तिकं गत आसीत्?' तेनोत्तरितम्—"न हि, ज्ञातपरिचितो न कश्चिद्गतस्तत्र। अहं स्वयमेव गत आसम्। लोकेभ्यस्तत्प्रशंसावादं निशम्य

स्वयमपि तं पश्येयमिति विचारितवान्। यदाऽहं तत्रागच्छम् तदा स महात्मा समुत्तिष्ठन्नेवासीत् प्रणम्य समुपविशन्तं मामवादीत्—"वत्स ! किमिच्छसि ?" मयोत्तरित्तम्—"केवलं भगवतो दर्शनम्।" तेनोक्तम् "न हि, केवलं दर्शनाभिलाषेणागतोऽसि, अन्यदप्यस्ति किंचित्तव चेतसि।" पुनरहमब्रवम्—"भगवन्! अहमिदं प्रष्टुमिच्छामि, यत् प्रातःकालं विहाय कालान्तरेऽपि भगवतो दर्शनं सम्भवति न वा ? मम हि द्वित्राः सन्ति प्रश्ना अनुयोक्तुम।" महात्माऽब्रूत-"इदानीं तु नाहं स्थातुं शक्नोमि अतिक्राम्यति समयः, नियमानुसारं तु मया कालान्तरे कस्यापि केऽपि प्रश्ना न समाधीयन्ते। प्रश्नोत्तराणां तु कथैव का तदानीमहं कुट्या बहिरपि नायामि। तथाऽपि किञ्चित्प्रष्टुं चेत्तव समुत्कटोऽभिलाषः, अद्य सायंसमये समेहि, यतोऽचिरादेव स्थानमिदं मया परित्यक्ष्यते।" निशम्यैवं प्रसीदन्नहं ततः प्रत्यागमम्, सविस्मयं च चेतसि चिन्तितवान्—किमिति महात्मना मम कृते स्वनियमेष्वीदृक् परिवर्त्तनमनुमतम्" इति।

मया पृष्टम्—"किमद्य सायं त्वं तमेव महात्मानं द्रष्टुं गमिष्यसि ?"

मेघश्याम ऊचे—"आम्, अहं तु गमिष्याम्येव, त्वयापि मया साकमवश्यमागन्तव्यम्। त्वमीदृग्विधेषु विषयेषु न विश्व-

सिषि। सर्वानेव मिथ्यावादिनः पाखण्डिनः कथयसि। सर्वत्रैव त्वं चिन्तयसि यदसौ द्रव्यमर्जयितुं लोकवञ्चनां तनोतीति। इमां तव भ्रान्तिमपहर्तुमेव समायमुद्यमः।" महात्मनस्तस्य सिद्धिचमत्कारमनुभूय बाढमहं विश्वसिमि यत् स निश्चयेन त्रिकालदर्शी सिद्धो महात्माऽस्तीति। ईदृशा विरला एव सत्पुरुषाः कदाचिदेव नगरेष्वायान्ति। तं वीक्ष्य त्वयापि ज्ञातं भवेत् यत अद्यापि ध्रियन्ते सिद्धा वसुन्धरायाम्। इत्थमप्यत्यन्तमल्पाल्पा एव सन्ति तथाविधाः। सौभाग्येनैव समुपनम्यते तथाविधानां पावनं दर्शनम्।"

अहमुच्चैः प्रहस्यावदम्—"मेघश्याम! त्वं सर्वथा ऋजुप्रकृतिमूर्खोऽसि, त्वमिव सरलप्रकृतिः सर्वत्रैव विश्वासी मया विरल एव दृष्टोऽस्मिन् वञ्चनामये संसारे। अन्ततो गत्वा मम सुहृन्मण्डले त्वमेवैकस्तथाविधोऽसि, य ईदृशेषु विषयेषु त्वरितमेव विश्वासमात्रहेन्। कुत्र साधुः कुत्र महात्मा? सर्वोऽयं केवलः पाखण्डः, लोकान् वञ्चयितुं प्रयुक्तेयं धूर्तानां युक्तिः। स्यादेतेन तस्य कोऽप्यर्थः। अत एव लोकानां चेतःसु स आत्मनो विषये विश्वासमाधातुं प्रयतते। यद्यहं तस्य पुरो गच्छेयम्, अद्य तस्य पाखण्डमुद्घाटयेयम्। यदनेन तस्य महात्मनश्चेतोऽन्यथा भावं न भजेत्, नापि च त्वं चेतस्तापं भावयेः। कथय, किमस्ति स्वीकृतम्?"

मेघश्यामो गम्भीरभावेनाह—"आम्, अस्ति स्वीकृतम्, त्वं यथेच्छं प्रश्नाननुयोक्तुमर्हसि महात्मनः पुरः, यथेच्छसि तथा तं परीक्षय, किन्तु सर्वमिदं सभ्यतामनतिक्रम्यैव कर्तव्यम्। संयतचेतसा सज्जनोचितमेव तस्य पुरो व्यवहर्तव्यम्। अन्ततोगत्वा बहिर्भवता महात्मनो विषये समादर एव दर्शयितव्यः। अहं बाढं विश्वसिमि, यत्स महात्मा भवतः प्रश्नानां यथार्थमेवोत्तरं दास्यति। परन्त्वत्र भवताऽप्येका प्रतिज्ञाकर्तुमुचिता।"

मयोक्तम्—"कीदृशी प्रतिज्ञा?"

स आहस्म—"इयमेव, यदि स महात्मा तव प्रश्नानां यथार्थमुत्तरं दास्यति, तर्हि त्वयाऽपि ततः परं तथाविधानां महात्मनां परिहासकरणं परित्यक्तव्यं भवेत्। सर्वस्याऽप्यतीन्द्रियस्य वस्तुनस्तत्साक्षात्कर्तॄणां च वञ्चकत्वं च न ततः परं त्वया वक्तुमुचितम्। सर्वथा परिवर्जयितव्य एवायं भवेत् दुरभ्यासो नूनं त्वया। ईदृशेषु विषयेषु यन्मम परिहासाधिक्षेपादि च त्वया क्रियते तदपि ततः परित्याज्यं भवेत।"

मयोक्तम्—"आम् स्वीकरोमि, प्रतिजाने च। किन्तु तथाविधमेवाहं प्रश्नं करिष्यामि, यस्य यथार्थमुत्तरं तेन कृतकसिद्धेन दातुं नैव पार्येत। किञ्च स यदुत्तरं दास्यति, तद्विलिख्य तवान्तिकमेव सुरक्षितं स्थापयिष्यामि, येन समुचितसमये तस्यासत्यत्वं प्रमाणीक्रियेत। यदि तस्य महात्मनामधारिण

उत्तरमसत्यमपि प्रमाणीकर्तुं शक्येत, तर्हि त्वयाऽपि ततः परमीदृशानां वञ्चकानां सङ्गतिर्विश्वासश्च परित्याज्यः स्यात्। निश्चितं तर्हीदम्। कथय, अद्य सायं कदा तदन्तिकं गन्तव्यम्?'

मेघश्यामोऽवदत्—"सायं सप्त होरावसरेऽत्रैव समेहि। आवां सम्भूयैव गमिष्यावः। तस्मिन्नवसरे गङ्गातटेऽपि कोऽपि नायाति। महात्मनः कुटीरेपि निर्जनतैव स्यात्तदानीम्। आवामेकान्ते तेन साकं यथेच्छं व्यव हर्तुं शक्नुयाव।"

( २ )

अहं हि काश्यामेव वसामि। मम पितुरत्र महानापणोऽस्ति महार्घवस्त्राणाम् तत्सम्भूतेन प्रचुरेण लाभेनास्माकं गार्हस्थ्यं सुखेन चलति। न जाने केन हेतुना, तातेनाहमात्मनो वस्त्रव्यवसायं न शिक्षितोऽस्मि। तातसुहृद्भिः साग्रहमनुरोधे कृतेऽपि तातेन तेषां वचनेषु कर्णमदत्त्वैव सनिर्बन्धमहमांग्लविद्यामेव समध्यापितः। मया काशीविश्वविद्यालये समधीत्य एम्. एस्. सी. परीक्षा स-सम्मानं समुत्तीर्णा। पश्चात्तत्रत्ये 'इञ्जिनियरिंग कालेज' नामके स्थापत्यविद्यालये पञ्चवर्षाणि समधीत्य सा विद्याऽपि मया सम्पादिता। ततः परं तातस्य प्रयत्नैः कतिपयमान्यधनिकानुरोधैश्च कर्णपुरे प्रसिद्धवस्त्रयन्त्रालये पञ्चशतमासिकवेतने मम नियुक्तिः सञ्जाता। आङ्ग्लविद्याप्रभावात् काशीविश्वविद्यालयीयस्वतन्त्रवायुमण्डलविहार-

राच्च घोरनास्तिकमतोऽहमभवम् । चार्वाकस्याप्युपरि मम नास्तिक्यमासीत् । अविरतं धर्मकर्मनिरतान् विधिनिषेधप्रति-पालकान् काशिकान् शास्त्रिणो दैन्यमग्नान् दृष्ट्वा धर्मकर्मसु श्रद्धारहितानां स्वैराचारिणां मादृशामहरहरभ्युन्नतिं च विभाव्य मम नास्तिक्यविचारा बद्धमूला अभूवन् । वर्णाश्रम-व्यवस्थां, स्पृश्यास्पृश्यविवेकं, धर्ममीश्वरं वेदान्, शास्त्राणि चाहं सर्वथा पाखण्डमेवाकलयन्नासम् । इन्द्रियतृप्तिरेव मम मते मुख्यो धर्म आसीत् । मम मातुः प्रबलेयमिच्छासीत्, यन्मम विवाहस्त्वरितं भवतु । मया तु यावच्छक्यमस्माद् बन्धनात् दूर एव स्थातुं प्रयतितम् । बहुषु स्थलेषु मम विवाहवार्ता प्रच-लिता तथापि सा मम दुराग्रहात् दोषाविष्करणकौशलाच्च न लब्धास्पदाऽभूत् । सम्प्रत्यहमेकमासिकमवकाशमवाप्य कर्णपुरात्काश्यां यदा समागतस्तदा मम जनन्या स्पष्टमेवाहम-भिहितः—"ललित ! अस्मिन् वारे तव विवाहः कर्तव्य एव भवेत्, तव किमपि कैतवं विवाहकार्यं रोद्धुं न प्रभवेत् । कर्णपुरे त्वं स्थातुमिच्छसि चेत् परिणीता तव भार्याऽपि सहैव त्वया तत्र यास्यति ।" मातुराग्रहवचनै र्मया समवगतम्, यदयं न केवलं मातुरेवाऽभिनिवेशः, तातस्याऽप्यत्राऽस्ति साहा-य्यमाभ्यन्तरीणमिति । मम हि बहुवारकृतैर्विवाहविघटनो-द्योगैस्तातस्य चित्ते भूयानसन्तोषः कृतपदो मया लक्षितः, यद्यपि

स तातेन वहिः स्पष्टं न प्रकाशितः। मयापि चित्ते चिन्तितम् इतः परं मम दुराग्रहो न शोभतेति। कथितं च मातु पुरः— "अम्ब ! यद्येतावती प्रवला तवेच्छा वधूमुखं द्रष्टुम् तर्हि ममाऽपि सा नूनं शिरोधार्यैव।"

ततः परं मद्विवाहप्रवन्धः प्रकाशं त्वरितं च प्रारभ्यते स्म। शीघ्रतायाः कारणन्त्विदमासीत यत् दैवज्ञैः कथितम्—यदि विवाहः कर्तव्यस्तर्हि अस्मिन्नेव मासे स भवितुमर्हति। ततः परं वर्षमेकं यावद्विवाहमुहूर्तो नोपलभ्यते। आगामिनि वर्षेऽस्मिन्नेव मासे पुनर्विवाहमुहूर्तो भवेत्। मम मातुरियान् विलम्बो दुःसह आसीत्। तातस्तु काश्यां प्रसिद्धो वस्त्रव्यवसायी धनिकः अहं च सुशिक्षितः पञ्चशतमासिकायो युवा सुन्दरश्चासमिति मम विवाहप्रवन्धे न किमपि प्रतिवन्धकं विलम्वकारणं चासीत। वहुषु स्थलेषु विचार्य परीक्ष्य च तिस्रः कन्यका मम कृते विचार्यतायामुपस्थापिताः। तासां जन्मपत्राण्यपि समानायितानि। तिस्रोऽपि कुमार्यः साक्षराः सुशीलाः सुन्दर्यश्चासन्निति पुरोहितमुखादवगतम्। एतास्वेव कयाचिन्मम विवाहो निश्चितप्राय आसीत्। कया सह विवाहो निश्चेतव्य इति तु जन्मपत्रविवेचकस्य हस्तगतमासीत्।

विवाहसम्भारास्त्वरितं संग्रहीतुमारब्धाः। अहं हि नवशिक्षितः स्वतन्त्रप्रकृतिश्चासमिति जनन्या तिसृणामपि तासां

कुमारीणां चित्रफलकानि समानाय्य मम पुरः स्थापितानि। अहं हि कृतकलत्रां परित्यज्य तास्वन्यतमां परिणेयां निर्द्धारयितुमिच्छन्नपि कां निर्द्धारयेयमिति नावगतवान्। यतस्तास्वेकाऽपि कुरूपा नासीत्। यद्येकस्या बिम्बफलोपमोऽधरो मम मनो लोभयति तर्ह्यन्यस्यास्तिलपुष्पसन्निभा नासा चेतसि निखातेव लक्ष्यते। अपरस्याः खञ्जनमञ्जुले भावपूर्णे नयने न मामन्यतो गन्तुमुत्साहयाञ्चक्रतुः अस्मिन्नेवानिश्चयावर्ते पतितोऽहमचिन्तयम्—"किं क्रियताम्, तिस्रोऽपि स्वस्वविशेषगुणैर्मां लोभयन्ति। कस्मिन्निकषे एताः परीक्ष्य परिणेतव्यां निर्द्धारयेयम्" इति।

इत्थं चिन्ताकुलस्यैव मे सुहृदा मेघश्यामेन तस्य त्रिकालदर्शिनो महात्मनो वृत्तमगादि। यः खलु महात्मा कार्तिके गङ्गास्नानपुण्यमुपार्जयितुं काश्यां गङ्गातीरे निर्जने कुटीं निर्माय स्थित आसीत्। मया मेघश्यामेन सह महात्मनो निकटे गन्तुं तु प्रतिज्ञातम्, व्यचारयञ्च कं वा तथाविधं प्रश्नं महात्मनः पुरः समुपस्थापयेयम्, येन तस्य महात्मनास्सर्वथा कृत्स्ना वैदुषी त्रिकालदर्शिता चापाऽर्था भवेत। पाखण्डिता च तस्य प्रकटीकर्तुं शक्येत। यदि मया स मृषावादी पाखण्डीति न प्रमाणीकर्तुं शक्येत तर्ह्यहमात्मनो नामापि परिवर्तयेयम्।

( ३ )

सायं सप्तद्दोरावादनात्पूर्वमेवाहं मेघश्यामस्य गोष्ठीगृहे समुपस्थितोऽभवम्। सोऽपि सन्नद्ध एवासीत्। मां दृष्ट्वैवोवाच—"किं भोः समागतस्त्वम् चिन्तितो वा तथाविधः प्रश्नः, यस्त्वया महात्मनः पुर प्रष्टव्यः।"

मयोत्तरितम्—"आम निश्चितं मया किं प्रष्टव्यमिति। परंतु तदहं ते नाधुना वक्ष्यामि, महात्मनः पुर एव श्रोष्यसि।" आवां ततः परमनु गङ्गातटं प्रस्थितौ, यत्र सा महात्मन कुटी आसीत्। निशामुखे प्रवहन् तुहिनजडः पवन आवयोर्हस्तपादं बधिरयतिस्म। भगवति भास्वति वर्तमाने सति कुत्राऽपि निलीय निवसन् दोषाकरस्तमन्तर्हितं विभाव्य सम्प्रति स्वानुयायिना नक्षत्रगणेन सह गगनमण्डलमधिरुह्य विराजमानो दृश्यतेस्म। पतितपावनी जाह्नवी धीरगत्या प्रवहन्ती पश्यतां नेत्राणि मानसानि च शीतलयति स्म। अहं मनस्येवाचिन्तयम्—पश्यत, अयं महात्माऽस्मिन् प्रचण्डशीते समये गङ्गातटे निवसति शीतवारणाय पर्याप्ता कम्बलादिसामग्री तस्यान्तिकेऽवश्यमेव न भवेत्। किमसौ शीतेन न बाध्यते? इत्थं तर्हि किमर्थमनेनेदृशमुन्मुक्तं प्रचुरशीतं स्थानं स्वनिवासाय क्लृप्तम्? कदाचिदयमस्याभिसन्धिः स्यात् यदीदृशेनाचरणेन लोके स्वस्य शीतातपसहत्वं निर्द्वन्द्वं च प्रथितं भवेत्।

कुटीरस्य समीपमुपगम्य आवां क्षणं तूष्णीं स्थितौ। उभ
यपार्श्वेऽपि कोऽपि नासीत्। सर्वथा शान्तिमयता लक्ष्यतेस्म
यत्र दिवसे महान् जनसम्मर्दो भवति तत्रैवेदानीं सर्वथा निर्ज
नतां दृष्ट्वा किञ्चिद्दिवसाश्चर्योऽहमभवम्। किन्तु तत्क्षणमे
स्मृतं मया यत्सायं समये महात्मा न कैरपि मिलति, न च
किंचिदपि भाषते, सर्वेऽपि महात्मनो नियममेनं जानन्ति अत
एवात्रेदानीं न कोऽपि लक्ष्यते। ईदृशेऽपि समये आवाभ्यां सह
वक्तुमवकाशदानं दर्शनानुमोदनं च नूनमावयोरुपरि महा
त्मनो विशेषानुग्रह एवास्ति।

पुराणं फलकद्वयमूर्ध्वमुखमवस्थाप्य कुटीनिर्मात्रा कुट्य
सामान्यमेकं प्रवेशद्वारं निर्मापितम्। कदाचित् शीतवायुप्रवेश
प्रतिबन्धाय, श्वमार्जारागमनवारणाय वा द्वारस्योपयोगश्चि
न्तितो भवेत्। मेघश्यामेन तदेव द्वारं किञ्चिदवघाट्य शनकै
रुक्तम्:—"भगवन्! आवामुपस्थितौ स्व।"

कदाचित् स महात्मा तदानीं निरुद्योगः अस्मत्प्रतीक्षापर
वाऽऽसीत्। त्वरितमेवोत्तरमागतम्। "आगच्छतं वत्सौ
अभ्यन्तरमुपागच्छतम्।"

कपाटमुद्घाट्य आवामन्तः प्रविष्टौ। कपाटं च पुनः पूर्व
वत् संवृतम्। मेघश्यामेन भक्तिपूर्वकं महात्मने प्रणामः कृतः।
मया तु मेघश्याममनस्तोषं रक्षता तदनुकरणं कृतम्। हस्ता

वुद्धम्य शुभाशीरभिदधना महात्मना कुटीरैककोणस्थितान्या-सनानि निर्दिष्टानि। आवां तत्रोपविष्टौ।

मया सामान्यदृशा सा कुटी सकृत्पर्यवेक्षिता। त्वरया निर्मितेव सा प्रतीयतेस्म, तथाऽपि नासुखावहाऽऽसीत। पञ्चषा जनास्तत्र सुखेनोषितुं शक्नुवन्ति स्म। तस्याः छादनम् प्राच्यां दिश्येकं वातायनम् तस्यैव समीपे महात्मन आसनमास्तीर्ण-मासीत्। पुरस्तादग्निकुण्डम् दक्षिणपार्श्वे दारुमयी त्रिपादी तदुपरि वेष्टनबद्धं किमपि पुस्तकमासीत्। मया परीक्षकदृशा महात्मन आकृतिरवलोकिता। षष्ठ्यधिकमेव वयः प्रतीतम्। केशा सर्वेऽपि पलितशुक्ला आसन्। आनाभिलम्बमानं श्वेतकूर्चं नितरां शोभतेस्म। आकारो गम्भीरः प्रशान्तश्च। सांसारिकदुःखसुखादिवासनातीतत्वमाकृती प्रतीयतेस्म। नेत्रयोः किमपि विद्युद्विलसितनिभं तेजो लक्ष्यते स्म। येनाहं क्षणं चित्रितोऽभवम्—व्यचिन्तयञ्च-इमे नेत्रे यदुपरि पतेताम् तद-भ्यन्तरस्य गुप्तातिगुप्तमपि रहस्यमवश्यमवगच्छेतामिति।

मम तु विशेषतश्चिन्तितुमवसर एव नासीत्। उपविष्टं मामवलोक्य स महात्मा मेघश्यामं सद्योऽब्रूत—"वत्स! त्वया सह समेतः कोऽयं सज्जनः? किमर्थं वाऽत्रागतः?"

मेघश्यामेनोत्तरितम्—"भगवन्! अयं मम सखा ललि-

तकुमारो नाम । वदतो मम मुखाद्भगवतो नामधामनी श्रुत्वा दर्शनार्थमयमायातः ।"

मयाऽपि प्रणम्याभिहितम्—"श्रुतं मया यदचिरादेव भगवता इतःप्रस्थास्यत इति, अत स्वनयने सफलीकर्तुमहमभ्युपस्थितोऽस्मि ।"

मया एते शब्दा महात्मनो विषये समादरं प्रदर्शयितुम् तस्य चेतसि मद्विषये कापि विपरीतभावना च नोपतिष्ठतामित्यर्थं च सविनयमुच्चारिता आसन । परन्तु मया दृष्टम्, मयैतैश्चाटुवचनैर्महात्मा न प्रसीदति स्म । स यथा पूर्वमेव गभीरः प्रशान्ताकृतिश्चालक्ष्यत । सोऽब्रूत—"भवादृशां विदुषामनुग्रहोऽयम् यद्भवद्भिर्ममकुटी पवित्रीक्रियते । कथयत, भवत कीदृशी सेवा मया कर्तुं शक्यते ?"

कदाचिदस्मदागमनेन महात्मनः प्रसन्नता नासीत् । सम्भवतः स शीघ्रतयैव किञ्चिद्वार्तालापं विधाय आवां प्रस्थापयितुमैच्छत् । व्यर्थमधिकवागाडम्बरस्तस्याप्रिय आसीत् । प्रायः संसारविरक्तानां साधूनामीदृशः स्वभावो भवति । मयाऽपि विचारितम्—यद्येवम्, तर्हि व्यर्थं चाटुवचनैः को लाभः स्वप्रयोजनं साधयितव्यम् । इदमेवात्र परीक्षणीयम्, यदयं वास्तविको महात्मा, काषायवस्त्रान्तरितः कोऽपि पाखण्डी वा ? वस्तुस्वरूपं परीक्ष्येतः प्रस्थातव्यम्, आवाभ्यामपि किमधिकं कालक्षेपः क्रियताम् ?

भूनिहितशिरसा साञ्जलिना मयोक्तम्—"भगवन् ! मदागमनकारण-मत्यन्तं क्षुद्रं स्वार्थमयं चास्ति । श्रुतमस्ति मया, यद्भगवता इहागमना-त्प्रभृति बहूनां भाग्यवतामिच्छाः पूरिताः, कठिनाः शङ्काश्च समाहिताः । ममापि चेतसि लोभः प्रादुरभूत् यदहमपि भगवत समीपमुपस्थाय निज-भविष्यदर्थेषु कतिपयानर्थनिवगन्तुं द्वित्रान् प्रश्नान् पृच्छेयम् लभेयं च तेषामुत्तराणि यद्यनुमन्येत सानुकम्पं भगवता ।"

महात्मनो वदने न प्रसत्तिर्न विरक्तिश्च ददृशे । स निर्विकारेणाकारे-णाह—"वत्स ! यदुक्तं भवता, 'मया बहूनामिच्छाः पूरिता' इति, तत्स-र्वथा मिथ्यैव । नाहमात्मनि किमपि तथाविधमलौकिकं सामर्थ्यं कलयामि येन लोकानां कष्टदूरीकरणे वाञ्छापूरकरणे च प्रभवेयम्, अहं तु लोकानाप-द्ग्रस्तान् दृष्ट्वा बाढमन्तरुत्पीडितो भवामि केवलं जगन्नियान्तारं परमात्मानं प्रार्थये यत् 'दयासागर ! भगवन् ! हरे ! दुःखितानां दुःखानि त्वरितं हरेति' । मम हि सा प्रार्थना स्वीकृता भवतु न वा, दुःखितानां दुःखान्यप-यान्तु न वा, सर्वमेतदहं चिन्तयामि । एवं चिन्तनं किलाऽनाधारचेष्टेति मे मतम् । यच्च भविष्यदर्थप्रकाशनचेष्टामुद्दिश्य भवतोक्तम् तत्राऽपि केवलं तथाविधार्थावगमाय प्रयतनमेव ममायत्तम् । इयानेवात्र विशेषः, भवादृशां सांसारिकाणां स्थितेरपेक्षया मम स्थितावस्ति किंचिद्वैशिष्ट्यम् ।"

महात्मा वदन्नेव मध्ये किञ्चिद्विरमतिस्म, आवां तत्कथनं सावधान-माकर्णयावो न वेति ज्ञातुमेव तेन तथा कृतं स्यात् । मयाऽपाङ्गप्रेक्षिते-र्मेघश्यामो दृष्टः, स एकाग्रचित्तो महात्मनो वचनं श्रृण्वन्नासीत् । अहमपि महात्मो वचनश्रवणे एकाग्रताऽभिनयमकरवम् ।

पुनरब्रूत महात्मा—"पश्यत, व्यापकोऽयं विषयस्तथाऽप्यहं परिमितै- रेव शब्दैः स्वाभिप्रायं कथयामि, अधिकं प्रपञ्चयितुं न ममावकाशोऽस्ति नापि स भवतोरपि। संसारोऽयं दुःखसागर इति कथ्यते—तेषां कृते ये तत्र समासक्ता वर्तन्ते, विविधानां वाञ्छानां भावनानां मोहजनितस्वार्थानां लालसानां च युद्धस्थलमेव किल संसारः। सर्वेऽपि मिथः प्रतीपाः स्वाकाङ्क्षाः पूरयितुं प्रयतन्ते। सर्वोऽपि वाञ्छति यदमुकं वस्तु मया लभ्यताम्, ममायं स्वार्थः पूर्णो भवतु, तत्रान्यस्य कियदनिष्टं भवतीति न कोपि चिन्तयति। अत एव परस्परभिन्नेच्छानां वासनानां च भूयान् संघर्षो भवति, यः खलु दुःखस्य निदानम्। कामक्रोधलोभमोहात्मिका यवनिका सर्वस्यैव दृक्शक्तिं तिरोधत्ते। अत एव प्रायः सर्वोऽपि जानन्नपि शान्तेन चेतसा स्वार्थहीनेन हृदयेन च कमपि विषयं विवेचयितुं न शक्नोति। अनेनैव हेतुना भविष्य- तोऽर्थस्य वास्तवं रूपमवगन्तुं न शक्नोति सांसारिको जनः। यश्च कश्चित् किंचिदवगच्छति सोऽपि मृषाभूतमेव सत्यमिति विपर्यस्यति। यदि सांसारि- केष्वेवकोऽपि निरपेक्षदशा विवेकयुक्तेन हृदयेन, गम्भीरेण चेतसा वासना- श्चेतसो दूरमपसार्य, निःस्वार्थेन मनसा भविष्यदर्थमन्वेष्टुं प्रयतेत, तर्हि तस्य भविष्यदर्थावगमने न किञ्चिदपि प्रतिबन्धकं पश्यामि, अवश्यं तथावि- धेन भविष्यदर्थज्ञानं सुलभम्। सांसारिकजनापेक्षया सर्वथा विपरीतैवास्माकं संसारत्यागिनां साधूनां स्थितिः। अस्माकं तु कस्यापि शुभेनाशुभेन वा न कोऽप्यर्थः कस्यापि प्रसादविषादाभ्यां नास्माकं सुखं दुःखं वा सम्भवति। संसारे च नास्माकं काऽपीच्छा, न च कुत्राऽपि लालसा, क्वापि च वयं नासक्ताः स्मः अस्माकं विवेके न किमपि मालिन्यं भवति, अतो वयं भवि-

ऽयतोऽर्थस्य वास्तविकं रूपं द्रष्टुं प्रभवामः। यदि भवादृशेष्वस्मादृशेषु चास्ति कोऽपि विभेदः तर्हि अयमेव सः। भवतु, कथयतु भवान् केनार्थेन समुद्विग्नं भवतश्चेतः, कं वा भविष्यदर्थं ज्ञातुमिच्छति भवान्। यद्यहं प्रभवेयं वक्तुम्, तर्हि ध्रुवं वक्ष्यामि।"

एवमुक्त्वा महात्मा तूष्णीं बभूव। मेघश्यामो मां साकूतमपश्यत्। अहं व्यचिन्तयम्—मम प्रश्नं केन रूपेण महात्मनः पुर उपस्थापयेयम्। यथा मम प्रश्नस्योत्तरणं महात्मनो दुष्करं भवेत् यथा च महात्मनो वास्तविकी वैदुषी च प्रकटिता भवेत्। एतावता संलापेनेदं तु निश्चितमासीत्—यत्स महात्मा विचारशीलो विद्वानप्यस्तीति। तेनैतावदुक्तमशेषं यथार्थं चित्तप्रत्यययोरैक्यं चासीत्। शनैः शनैर्ममापि चेतसि महात्मनो विषये श्रद्धावृत्तिरुदेतुमारभत। महात्मानं पाखण्डिनं प्रमाणयितुं परीक्षितुं, तस्य मिथ्यावादित्वं समर्थयितुं, 'सम्प्रति वास्तविकामहात्मानो दुर्लभाः सन्तीति' तत्त्वं मेघश्यामस्य चेतसि प्रवेशयितुं च ममात्रागमनमभूत्। महात्मनो वचनश्रवणमात्रेणैव तत्र श्रद्धाभावोद्गहनं तावतैव तस्य महात्मतायाः समर्थनं च ममेच्छायाः स्वार्थस्य च प्रतीपमासीत्।

मां विचारयन्तं दृष्ट्वा महात्माऽब्रूत—"पश्य वत्स! ममात्रागतस्यैको मासो व्यतीतः अत्रान्तरे सहस्रशो जना मम समीपामुगताः तेषु प्रायः प्रत्येकं विभिन्नार्था आसन्। कश्चित् सरलचेतसा सदुपदेशं श्रोतुम्, दुखितः कोऽपि व्यथितं स्वहृदयमाश्वासयितुं, कोऽपि केवलं मां परीक्षितुमेव समागत आसीत्। तेषु कस्याप्युपरि कोपं कर्तुं, सन्तोषं च प्रदर्शयितुं

न किमपि निदानमस्ति मदन्तिके । अहं हि लोकस्य भावना यावज्जीवना भ्यस्तान् दुरभिनिवेशांश्च क्षणिकेन सहवासेन परिवर्त्तयितुं सर्वथाऽसमर्थ एवाऽस्मि । यः खलु येन रूपेण समागतः मया स तेनैव रूपेण तथैव परिगृहीतः । विचारेण यच्चेतसि समायातं तत्तस्मै कथितम् । केनाप्यहं वास्तविको ज्ञातेति गृहीतोऽस्मि । केनापि च धूर्तः पाखण्डीति, मम दृष्टौ तु तावुभावपि समानावेव । यदि भवानपि मां परीक्षितुमेव समायातस्तर्हि तत्स्पष्टमभिधीयताम्, न ममात्रेषदपि क्षोभो वैरूप्यं वा भवेत् । प्रत्युत भवतः सत्यानुरक्तिं दृष्ट्वा वाढमहं प्रसीदेयम् । तथागतेपि व्यतिकरे यथासम्भवमहं भवतः शङ्काः समाधातुं प्रयतिष्ये ।"

महात्मनो वचनानि यथार्थानि हृदयं प्रविशन्ति चासन् । आश्वासितं चासीन्महात्मना—यत्कस्यामप्यवस्थायां तेनास्मच्छङ्काः समाधास्यन्त इति । इत्थमवस्थायाम्, एवं स्फुटमभिहिते सत्यपि, मनोगतगोपनमसत्यभाषणं वा न मे रोचतेस्म । मया विनीतभावेनोक्तम्—

" अहमेकमर्थं ज्ञातुमिच्छामि, येन मम भविष्यज्जीवनस्य प्रगाढः सम्बन्धोऽस्ति । यदि भगवता स्वकीयस्थिरविचारशक्तिद्वारा तद्विषये यथार्थमुत्तरं दीयेत, तर्ह्यहमुपकृतो भवेयम् । इदमपि च नाहं गोपयामि, यद्भगवता मम प्रश्नानां यथार्थमुत्तरं दातुं शक्यते न वेत्यपि परीक्षितुमहमिच्छामि । पर्यवसाने भगवतः कथनानुसारमेव यदि फलं घटेत, तर्हि मम महात्मनां त्रिकालदर्शित्वे विश्वासो भवेत् । यन्मम मनोगतमासीत् तन्मया स्पष्टं कथितम् । एवं कुर्वता मया यदि धाष्टर्यमनुष्ठितम्, तर्हि तत्क्षम्यतां भगवता ।"

महात्मा मन्दं मन्दं जहास । मदागमनात्प्रभृति प्रथम एवायमवसरो मम महात्मनो निर्विकारे वदने मन्दस्मितरेखादर्शनस्य । स आह—"वत्स ! निश्छलं सर्वं मनोगतं स्पष्टमभिदधानं त्वां दृष्ट्वा प्रसीदामि । मम त्वेतेन महान् परितोषोऽस्ति, यत्त्वया स्वमनोगतो वास्तविको भावो न निह्नुतः । किन्तु त्वयेदमवश्यमवगन्तव्यम्, यन्मयाऽऽत्मन एकान्तजीवने मननिदिध्यासनादिभिर्यद्यपि हिरण्यगर्भसर्गस्य बहूनि दुर्ज्ञेयानि रहस्यान्यवगतानि सन्ति, तथाऽपि सर्वोपरिष्टाद्वर्तमानस्य लीलामयस्य परमात्मनोऽद्भुतानां लीलानां शततममप्यंशमवगन्तुमहं न पारयामि । इच्छाशक्तिमहिम्ना सिद्धा महात्मानो यत्कर्तुं प्रभवन्ति, तदहमंशतो जानामि, स्वयमपि च समुचितेऽवसरे विराडिच्छाशक्त्या सह सङ्कुचितां निजेच्छाशक्तिं संयोजयितुं चेष्टे च । तथाऽप्येतावतैव सामर्थ्यकणलाभेन नाहमात्मानं सिद्धं मन्ये, न च कथमपि गर्वं करोमि । भवतः पुरः परीक्षाप्रदानेऽपि न ममाधिकारोऽस्ति । भगवता शतवर्षमितमेव परमायुर्मानवेभ्यः कल्पितम्, तावत्यल्पीयसि समये यदि मानवोऽहर्निशं प्रकृतिरहस्यान्वेषणे प्रयतेत तर्हि तस्य रहस्यस्याल्पतमांशमप्यवगन्तुं न शक्नुयात् । इत्थमपि त्वयाऽनुयुज्यताम्, तव द्वयोः प्रश्नयोरुत्तरमहं प्रदास्ये । यदि ममोद्योगेन तव किञ्चिदपि भविष्यदर्थरहस्यं विदितं भवेत्तर्हि बाढमहं प्रसीदेयम् ।"

मया महात्मानं प्रणम्य आवरणादुन्मोच्य त्रीणि चित्राणि महात्मनः पुरो निहितानि । उक्तं च—"भगवन् ! दृश्यताम्, भगवान् किल मम पितृकल्पः, अतो भगवतः पुरो न मम लज्जाकरणमुचितम् नापि च किंचि-

न्निह्वोतुमुचितम् । अचिरादेव ममोद्वाहो भविता । प्रायः पक्षाभ्यन्तर एव मुहूर्तनिश्चयो भवेत् । तिस्रः कन्यका मम तातेन मदर्थे विचारयोग्या इति निर्द्धारिता । दैवज्ञैरद्याऽपि तासु कतमा निर्द्धारणीयेति नोपदिष्टम् । श्वः प्रातर्दैवज्ञाः स्वनिश्चयं वदयन्ति । भगवता चित्रत्रयमिदं वीक्ष्य सविचारमभिधीयताम् आसु कतमा मे भाविनी भार्या । कस्या जीवनसूत्रं मम जीवनसूत्रेण साकं संलग्नमस्ति । विधात्रा मम भार्या भवितुं का ललना सृष्टा वर्त्तते " ? ।

कुट्या एकस्मिन् कोणे एको दीपकः प्रज्ज्वलन्नासीत् । यस्य साधारणं ज्योतिः कुटीगतं तमो दूरयितुं चेष्टते स्म । मया शनकैः स दीप आनीय महात्मनः पुरो न्यधायि । तेन तानि चित्राणि सावधानं निरीक्षितानि । मया चिन्तितं, कदाचिदसौ महात्मा वयमाङ्गलशिक्षादीक्षिता नवयुवका इव सौवर्णशलाकाङ्कितमुपनेत्रमपेक्षेतेति । परन्तु ममेयं चिन्ता निर्मूलाऽऽसीत् । तस्मिन् साधारणेऽपि प्रकाशे महात्मनो नयनज्योतिस्तानि चित्राणि तदधः सूक्ष्मतमाक्षरलिखितानि कन्यकानामान्यपि स्पष्टमवगन्तुमपारयत् । महात्मना क्षणं चित्राणि निरीक्ष्य तानि मम हस्ते ददताऽभिहितम् " वत्स ! दृष्टानि मया चित्राणि, अवगतं चावगन्तव्यम्, दीपं यथास्थानं निधेहि " इति ।

अहं च समुच्छ्लता चेतसा दीपं यथास्थानं निधाय पुनर्महात्मनः समीपमागत्योपाविशम् । महात्मा जगाद " वत्स ! अवधेहि त्वया कथितम्, एतानि तासां तिसृणां कन्यानां चित्राणि यासु कयाचित्तव विवाहो

भवितेति । किमेतदेव त्वया कथितमन्यद्वा किमपि ? "

मयोक्तम्—" इदमेवोक्तं भगवन् !" ।

मेघश्यामेन मम ईदृशप्रश्नकरणस्य गूढोऽभिसन्धिरवगतो वा नवेत्यहं न जाने । बुद्धिपूर्वकमेव मयेदृशः प्रश्न उपन्यस्त आसीत् । एतासु तिसृषु कन्यासु कया साकं परिणयः शुभो भवेदिति प्रश्नश्चेदभविष्यत्, तदा तु महात्मनस्तदुत्तरदानमतिसरलमभविष्यत् " अमुकया साकं तव विवाहः शुभ " इति । परन्तु " कतमया सह मम विवाहो भविष्यती " ति मया पृष्टमासीत् । बाढं जटिलोऽयं प्रश्नः । एतदुत्तरश्रवणोत्तरं महात्मनो मृषावादित्वमक्लेशेन समर्थयितुं सुशकम् । महात्मा स्वबुद्धिनिकषे परीक्ष्य यया साकं मम विवाहनिश्चयं वक्ष्यति, तया सह विवाहमकृत्वैव महात्मनः सिद्धिपाखण्डः प्रकटयितुं शक्यः । इत्थं च मेघश्यामोऽपि महात्मनः सिद्धिमत्त्वे विश्वासं त्यक्ष्यति । अयमेव ममात्रागमनस्य हेतुः । ऋजुस्वभावो मेघश्याम ईदृशेषु पाखण्डिषु विश्वसिति, स तस्य विश्वासो मयाऽवश्यं दूरीकरिष्यते !

मम प्रश्नस्तु सत्यमेव महात्मानं सम्भ्रमे पातयामास । स नेत्रे निमील्य मुहूर्तं तूष्णीमास । अथोन्मील्य चक्षुषी तेन शनैः शनैरभिहितम्—" वत्स ! त्वया प्रदर्शितचित्रासु तिसृष्वप्येतासु कन्यासु नैकाऽपि ते भार्या भविष्यतीति विधिलिखितं पश्यामि ।"

उत्तरं श्रुत्वा चकितोऽहमभवम् । नेदृगुत्तरं मया प्रतीक्षितमासीत् । निमिषादेवात्मानं प्रकृतिस्थं विधाय सस्मितमहमवोचम्—" महात्मन् !

भवदुक्तेरभिप्रायो मया नावगतः, किं न स्मर्यते भगवता, कथितमासीत्। एनास्वन्यतमया पक्षाभ्यन्तरे मम परिणयोऽवश्यं भावी, सर्वोऽपि विवाह-सम्भारः सन्नद्धप्रायोऽस्तीति"। महात्मा ऽब्रूत—'वत्स ! स्पष्टार्थमेव मयोक्तम् पुनरधिकं विशदयामि शृणु। इतः प्रभृत्येकवर्षाभ्यन्तरे तव विवाहयोगो न दृश्यते। न च दर्शितचित्रासु कन्यासु काऽपि ते भार्या भविष्यति। इदं हि निश्चितं विधेर्विधानम्। एतत्प्रतीपगामी प्रबलोऽपि चेत्प्रयत्नस्त्वया क्रियेत, न सफलो भविष्यति सः"।

यदि काऽपि विशाला शिला सहसा मम शिरस्यपतिष्यत् ततोऽप्य-धिकमाश्चर्यं समभून् निशम्य महात्मनस्तथाविधमुत्तरम्। मया साश्चर्य-मभिहितम—"भगवन् ! किं मम परिणयः पक्षाभ्यतरे न भविष्यति ? किं भगवता सम्यग्विचार्येदमभिधीयते ? विवाहोपस्करसम्पादनादौ यद्बहवो मम कुटुम्बिनः सम्प्रति व्याप्रियन्ते, यच्चात्र तैः परिश्रम्यते, किं तत्सर्वमेकपदे विफलं भवेत् ?"

महात्मा दृढगम्भीरस्वरेण जगाद—"आम् सर्वमेकपदे व्यर्थं स्यात्। मया सम्यग्विचार्य कथ्यत इदम्। नाधुना ते विवाहयोगः सम्प्राप्तः"।

मेघश्यामस्य पुरो मया प्रतिज्ञातमासीत् यन्महात्मनः पुरः सभ्यता-मनतिक्रम्यैव वर्तेयं इति। अत एव मया कथंचिदात्मानमवरुद्ध्य मुखाग्र-मागतोऽप्यट्टहासप्रवाहो बलान्निवर्तितः। मया मनसि चिन्तितम्—नूनं विक्षिप्त एवायं महात्मा। किमिदं सम्भवति, यदागामिनि पक्षे मम विवाहो न भवेत्। कुतो न भवेत् ? सर्वः प्रबन्धः सन्नद्धः। कन्यका अपि

निश्चिताः । मुहूर्तोऽपि निश्चितप्रायः । किं तर्हि प्रतिबन्धकं विवाहे ? महात्मनेदृशी शिरःपादरहिता भविष्यदर्था वाक्कथमभिहिता ? निश्चितरूपेणासत्या वागियम् । मयाऽपि सयत्नमेषाऽसत्या विधास्यते । कृतकगम्भीराकृतिर्भूत्वा ऽहमवोचम्—"भगवन् ! कृपया भगवता यथेदमभिहितम, तथा अन्यदपि किंचिदुच्यताम् । मम विवाहः कदा भविष्यति ? कुत्रत्या कीदृशी का च भवेन्मम भार्या ? भगवतो वचनं श्रुत्वा सत्यमहमाश्चर्यसागरे मज्जामि । वाञ्छामि च भगवदनुग्रहेण मम विवाहविषये सर्वमपि भविष्यदर्थमवगन्तुम् !"

महात्मना मम प्रश्नस्योत्तरं त्वरितं न प्रदत्तम् । प्रश्नं निशम्य स किञ्चित्सम्भ्रमे पतित इव लक्ष्यतेस्म । नेत्रे निमील्य क्षणं विचारयाञ्चासीत । अहमेकाग्रदृशा तन्मुखं निरवर्णयम । मेघश्याममनु दृशौ प्रेर्यं मया निश्चालितम् यत्सोऽपि महात्मनो वदने दत्तैकाग्रदृष्टिरासीत् ।

महात्मा मामपृच्छत्—"वत्स ! तव भाविन्या भार्याया रूपमाकृतिं चाहं वर्णयेयम्, तस्य नाम निवासस्थानं चाहं कथयेयमिति त्वमभिप्रैषि किम् ?"

मयोक्तम्—"आम् भगवन ! भवादृशां दिव्यदृशां सिद्धपुरुषाणां सर्वमेवाऽपरोक्षं किल । अस्माकं तु भविष्यदर्थः सर्वोऽपि तिमिराच्छन्नः प्रतीयते । भगवान् दिव्यदृशा सर्वं ज्ञातुं

समर्थ इति पृच्छामि । यदुक्तं भगवता, तथैव ममाभिप्रायोऽस्ति ।"

ततः परं स महात्मा न किञ्चिदब्रूत । स्थिरासनो नासाग्रदृष्टिः सन् विचारयामास । तदानीं महात्मनः शरीरमेव तत्रासीत, मनस्तु कुत्राप्यन्यत्र विचरितुं गतमिव प्रतीयतेस्म । आवयोरेव श्वासप्रश्वासशब्दः प्रचलन्नासीत् । कुटीरस्य बहिः भगवती जह्नुतनया निःशब्दं प्रवहतिस्म । सर्वतः शान्तमासीद्वातावरणम् । महात्मानमित्थं भूत दृष्ट्वा मम मनसि विविधा विकल्पाः प्रादुरभूवन्—" किमसौ महात्मा मम प्रश्नस्य किमुत्तरं देयमिति चिन्तयति । यद्यसौ मम प्रश्नस्य सम्यगुत्तरं दास्यति तर्हि विश्वसनीया भवेदस्य सिद्धता । परन्तु एतत्प्रश्नोत्तरसत्यता कथं परीक्ष्येत ? उत्तरप्रथमांशपरीक्षा तु आगामिनि पक्ष एव भविष्यति । द्वितीयांशपरीक्षा त्वेकवर्षानन्तरम् । यद्यनेन मम भाविन्याः पत्न्याः नामधामस्वरूपादिकं वक्ष्यते, तर्हि तदप्येकवर्षादनन्तरं सुपरीक्षितं भवेत् । यद्येकवर्षानन्तरं महात्मन उक्तिर्वितथा भवेत, तदाऽहं किं कुर्याम् ? तदानीं कुत्र भविष्यत्यसौ महात्मा । संसारविरक्तो महात्मा मम भाविन्याः पत्न्या रूपमाकृतिं च कथं वर्णयितुं प्रभवेदित्यपि महत्कौतुकास्पदम् । अथाप्यसौ तूष्णीमेवास्ति । मन्ये उत्तरं कथं देयमित्येव चिन्तयति । "

सहसा महात्मनः शरीरं किञ्चिच्चलितमभूत् । दीर्घः श्वासो विसृष्टस्तेन । मत्प्रश्नस्योत्तरमवधारितमिति प्रतीयते स्म ।

मामनु नयने प्रेर्य स आह—" वत्स ! किं त्वमात्मनः प्रश्नस्य कृत्स्नमुत्तरमधिजिगमिषसि ? "

मयोक्तम्—" यदि भगवानपरिचितेऽपि मयि दयां विधाय प्रश्नोत्तरप्रदानायासं न गणयिष्यति—"………

सोऽब्रूत—"यद्येवम्, तर्हि पश्य तस्मिन् कोणे भूयानस्ति मृत्तिकाराशिः, तत एकं महान्तं खण्डमादाय मत्समीपमानय "।

अहं मनस्येव व्यतर्कयम्—किं करिष्यति महात्मा मृत्तिकाखण्डेन । अहं मृत्खण्डमुपानयम् । स जगाद—" इमां त्रिपादीमात्मनः पुरः स्थापयित्वा तदुपरि मृत्खण्डं निधेहि "।

मया तथाऽनुष्ठाय स्वस्थाने समुपावेशि ।

अथ महात्मा वदति स्म—" अवधेहि वत्स ! कुत्रत्या कीदृशी का च कदा ते भार्या भविष्यतीति तव प्रश्नोऽस्ति । यदि त्वं स्थिरया धिया शान्तेन चेतसा च चिन्तयितुं शक्नोषि, तर्हि सम्भवतः स्वप्रश्नस्य स्वयमेवोत्तरं दातुं प्रभविष्यसि । यतः प्रत्येकं मनुष्यः स्वेच्छाशक्तिमहिम्नाऽद्भुतान्यपि कर्माणि कर्तुं शक्नोति । आत्मशक्तेः परं किञ्चिदपि नास्ति । त्वम् मनश्चित्तमेकाग्रं कृत्वा सावधानममुं मृत्खण्डम्पश्य, सम्भवत आत्मनो भाविन्या पत्न्याश्चित्रमत्र द्रक्ष्यसि ।"

"किमसौ महात्मा विक्षिप्तोऽस्ति ! मृत्खण्डे कस्याऽपि चित्रं कथमहं द्रष्टुं शक्नुयाम्" इत्यहं साश्चर्यमविश्वासपूर्णया दृशा महात्मानमनु निरवर्णयम् ।

सोऽब्रूत—"किं मृत्खण्डे कस्यापि चित्रस्य दर्शनमसम्भवि मन्यसे । त्वं मद्वचनेन 'नायं मृत्खण्डः किन्तु पारदर्शि काचमिद'मिति किञ्चित्कालं मन्यस्व ।"

अहमगादिषम्—'किं भगवता परिहासः क्रियते ? मृत्खण्डं काचत्वेन कथमहं भावयेयम्, तदन्तरे चित्रं च कथं पश्येयम्, किमीदृक् कदाऽपि सम्भवति ?"

स उवाच—"किमिति न, संसारेऽस्मिन्नसम्भाव्यं नाम किमपि नास्ति मानवः स्वां प्रबलामिच्छाशक्तिं यदि व्यापारयितुं नेहते तर्ह्यन्यदेतत । त्वं मद्वचनेन तथा कर्तुं चेष्टस्व, ततो प्रेक्ष्यसि फलं भवति न वेति" ।

महात्मनः कथने गम्भीरताऽऽसीन अतस्तद्वचसां परिहासालापप्रायता न कल्पयितुं योग्या । इत्थमपि मम तद्वचने नाल्पीयानपि विश्वासो ऽभूत । किं कुर्याम् किं वा न कुर्याम् तद्वचांसि यथार्थानि परिहासप्रायाणि वाऽवगच्छेयम् । न किमपि निश्चेतुमहमपारयम् ।

पुनरभ्यधायि महात्मना—"वत्स ! त्वं स्थिरचेता भूत्वा सर्वा अपि मनोवृत्तीरस्मिन् मृत्खण्ड एव सन्धेहि । अन्यत्सर्व-

मस्मिन् क्षणे विस्मर। इममशान्तिमयं संसारं, यत्र त्वं संसरसि, तवेमं सखायं, इमां कुटीं, मां च तव पुरःस्थितमस्थिमांसपिण्डं सर्वथा विस्मर। आन्तरेण कल्पनामयेन चक्षुषाऽपि मृत्खण्ड-मेव पश्य, भाविन्याः स्वभार्यायाश्चित्रमत्राहं दिदृक्षामीति सर्वा-त्मना भावय। ततो द्रक्ष्यसि किं दृश्यत इति।"

मया चिन्तितम्—महात्मनः कथनानुसारं प्रयतने को दोष, यदि मया स्थिरचेतसा ध्यानपूर्वकं दृष्टेऽपि न किंचिद्दृ-श्यं पुरः समुपतिष्ठेत तदा ध्रुवमवधारयेयं धूर्तोऽयं महात्मेति। मत्प्रश्नोत्तरं दातुमपारयन्नसौ मां वचनेषु व्यामोहयतीति। मुहूर्तं महात्मनो वचसि विश्वासमाधाय किमपि कौतुकं मया ऽवश्यं द्रक्ष्यते इत्यप्यवधाय तं मृत्खण्डमनु दृष्टिं स्थिरां कृत्वाऽहमुपा-विशम्। कुटीराभ्यन्तरे सर्वथा शान्तिरासीत्। कदाचिन्मां च निर्वर्णयन्नासीत्। कुट्यामागमनात्परं तेनैकोऽपि शब्दो नोच्चारित आसीत्। महात्मना सह मम संवादे कौतूहलमनुभवता तेन मध्ये किमपि कथनमनुचितमिव विभावितं भवेत्। महात्मा च स्थिरया दृशा मामेव पश्यन्नासीत्, तदानीं तस्य नयनाभ्यां क्षणे क्षणे किमपि विद्युद्विलसितनिभं तेजः प्रकटीभवल्लक्ष्यते स्म। अहं किल महात्मन आदेशानुसारं तस्मिन् मृत्खण्डे चित्तं स्थि-रीकर्तुं सर्वभावेन चेष्टामकरवम्। अत्रान्तरे समयः कथमतीया-येति नाहं विस्पष्टमवागच्छम्। शनैः शनैः कुटीराभ्यन्तरे गाढं तमः प्रसृतमिव प्रतीतम्, दीपज्योतिरपि लुप्तमभूत्। अन्तर्बहिः

सर्वत्र काऽपि विचित्रा पूर्वाननुभूता स्तिमितता लक्ष्यतेस्म । यथा यथा मम चित्तमेकाग्रं बभूव तथा तथा मम हृत्स्पन्दनमपि मन्दमन्दं बभूवेव । अथ कयाऽपि प्रबलया शक्त्या मम चेतसि " सिद्धोऽयं महात्मा स्वेच्छाशक्तिमहिम्ना मम पुरः किमप्यद्भुतं दृश्यमवश्यमुपस्थापयिष्यति " इति विश्वासो दृढमाहित इव । सहसा मया तस्मिन् मृत्खण्डे किमपि परिवर्त्तनमनुभूतम् । महात्मनः कथनानुसारमेव तस्य मृत्खण्डस्य पारदर्शककाचात्मना शनैः शनैः परिणतिरनुभूयते स्म । यावदहं मन्त्रमुग्ध इव कौतुकमिदं पश्यन् " किमसौ मे दृग्भ्रमः " इति वितर्कयामि, तावदेव मया दृष्टम्, स मृत्खण्डः काप्यन्तर्हित आसीत् तत्स्थाने तावदाकार एकः काचगोलः पुरः स्थितः । अन्तर्निर्मले तस्मिन् तदाधारत्रिपादिकाकाष्ठमालिन्यमपि प्रतिफलितं व्यलोकि । किं मम नयने मां वञ्चयतः, विकृतं वा मे शिरः, यदहं वस्तूनि विकृतानि पश्यामि । सकृन्नयने निमील्य पुनरुन्मील्य च दृष्टम् । चिन्तितं च—" किं स महात्मा मम सखा मेघश्यामश्च मां मृत्खण्डमहमिव काचगोलं पश्यतो वा ? " परन्तु चेष्टमानेनापि मया तयोर्मुखावलोकनार्थं नयने प्रेरितुं न पारितम् । काचगोलान्नयने अपसारयितुं न मे शक्तिरासीत् । कापि प्रबला शक्तिर्मम नयने काचगोलादपसारयितुं न ददातिस्म । तस्मात्काचगोलात्किमपि पीताभं मन्दमन्दं ज्योतिरपि निःसरत्प्रतीतम् ।

येन स काचगोलस्तदन्तर्गतं च दृश्यमेव केवलं प्रकाशितं भवेत् तथाविधं मन्दं ज्योतिस्तदासीत्। सहसा मया चिन्ततम्—"नूनमिदमिन्द्रजालम्, ऐन्द्रजालिकोऽयं महात्मा मां वञ्चयितुं चेष्टते। उच्चैरुद्घोष्य वाढमस्य पाखण्डमहं प्रकटयेयम्।" इत्थं विचिन्त्य उच्चैरुद्घोषयितुं चेष्टमानस्य मे कंठनलिका केनाऽप्यवरुद्धेव जाता। नैकोऽपि शब्दः कंठाद्बहिरुद्गच्छतिस्म। बलादिव केनापि प्रेरिता मम दृक्शक्तिश्चिन्ताशक्तिश्च पुनरपि तस्मिन् काचगोले एव दृढमेकाग्रतामगाहत। निमेषानन्तरमपश्यम्—तत्र काचगोलाभ्यन्तरे धूम इव समुद्गच्छतिस्म। स एव धूमस्तदनन्तरं विशालकुट्टिमात्मतां गृहस्वरूपं च दधार। यथा कश्चिच्चलच्चित्रपटेषु विविधानि दृश्यानि स्पष्टं पश्यति, तथैवाहं कस्यापि धूमशकटीविश्रामस्थलस्य (रेलवेस्टेशन) स्पष्टं चित्रमवालोकयम्। विशाला धूमशकटी पुरःस्थिताऽस्ति। यात्रिण आरोहन्ति, अवरोहन्ति च। भारवाहका इतस्तता धावन्ति। एकतः पंक्तिशा प्रकोष्ठा दृश्यन्ते। किञ्चिदन्तरं गत्वा पंक्त्यन्तरगामी सेतुरस्ति। किमभिधानमिदं धूमशकटीविश्रामस्थलम्? अपरिचितमिव प्रतीयते। नूनं न दृष्टपूर्वं मयेदम्, अतो न स्मर्यते। चलच्चित्रपट इवात्रापि सर्वं स्पष्टं लक्ष्यते।

अहं चकित इव भीत इव विक्षिप्त इव च निरुद्धनिःश्वासं यावदिदं दृश्यं पश्यामि तावदेवैकस्यास्तरुण्याश्चलच्चित्रं पुरः

समुपास्थितम्। यथा यथा सा तरुणी पुरः समुपसर्पति, तथा तथा तच्चित्रं स्पष्टतरं भवति। षोडशहायनावस्थायास्तस्यास्तरुण्याः शरीरे पीतवर्णा महार्घा शाटी, तदुपरि सूक्ष्मतरं श्वेतवर्णमुपरिधानीयं च विराजते। हंसगतेस्तस्या गमनसौष्ठवं सौकुमार्यातिशयं पुष्णाति। तस्या वदने विलसन्ती मुग्धता, विशाले मदिरे च तदीक्षणे, रसाप्लुतः संवर्तिकारुणो बिम्बाधरः, शुकचञ्चुनिभा नासा, तप्तकार्तस्वरविजित्वरी देहद्युतिश्च मां सविशेषमाचकर्ष। ईदृशी सुन्दरी न मया दृष्टपूर्वाऽऽसीत्। दर्शनं तु दूरे ईदृशरूपवर्णनमपि न मया कुत्रापि पठितमाकर्णितं च। भूतलमुत्तमं गन्तुमागता काऽपि सुरसुन्दरीव सा प्रतीयतेस्म। अहं तु तदानीं सर्वमप्यन्यत् - तां कुटीं, तं महात्मानं तत्प्रसादान्मया मृत्तिकाखंडे दृश्यमानं चित्रं धूमशकटीविश्रामधामादि सर्वमेकपदे विस्मृत्य तामेव सुन्दरीं पश्यन्नासम्। किमीदृशं सौन्दर्यं मर्त्यलोके सम्भवति ? अथवा महात्मन इच्छाशक्तिसम्भूता सेयं रूपसम्पत् ? किमेषा मम भार्या भवेत्। किमीदृशं मम सौभाग्यमस्ति। मम तातेन मदर्थं पूर्वं निश्चितास्तिस्रः कन्याः किलाऽस्याः पदधूलितुलनामपि कर्तुं नेशते। किं वात्र प्रमाणम्, यदेषा सुन्दरी मया लब्धुं शक्येत मन्ये विकृतं मे शिरः। अहं किंकर्तव्यविमूढ इव यावत्तां सुन्दरीं पश्यन्नित्थं विचिन्तयामि, तावदेव सहसा सा ऽन्तर्दधे। अहमितस्ततो दत्तदृष्टिस्तामन्वेषयामि यावत्

तावत्स विशालः कुट्टिमः, ते प्रकोष्ठाः, सा धूमशकटीत्यादि सकलमपि तद्दृश्यमव्यक्तच्छायां भवच्छनैः शनैरन्तर्दधे । यथा कश्चिदालेख्यलेखकः स्वयं निर्मितं चित्रमप्रीतिकरं मत्वा श्वेतवर्णतूलिकया तदशेषं विलोपति, तथैव तत्सर्वं दृश्यमन्तर्हितम् अभ्रखण्डानीवेतस्ततो धूमपुञ्जः केवलं ददृशे, सोऽपि शनैः शनैरन्तर्हितः केवलं काचगोलोऽवशिष्टः, निमेषान्तरं पूर्ववदेव मृत्खण्ड एव दृग्गोचरोऽभूत् ।

अहं हि निसर्गतो निर्भीको हृष्टपुष्टसर्वाङ्गो युवाऽपि तत्क्षणं कम्पमानसर्वाङ्गः केनापि भयेनाभिभूयमान आसमिति कथनं यद्यपि लज्जास्पदम्, तथाऽपि सर्वथा सत्यम् । उच्चैराक्रोश्य इन्द्रजालमयात्तस्मात्कुटीरात् तत्क्षणं पलायितुमिच्छन्नपि गिरः शरीरस्य चाऽप्रभुतामनुभूय न किञ्चिदपि कर्तुमपारयम् ।

शनैः शनैर्मम शरीरे चलनशक्तिः प्रत्यावृत्तेव प्रतीयतेस्म । कथंचिन्नेत्रे उन्नमय्य यावत्कुट्यां पश्यामि, तावत् सर्वत्र गाढं तमः प्रसृतं प्रतीतम् । निमेषानन्तरं कुटीकोणे निर्वाणप्रायस्य दीपस्य ज्योतिरमावास्यानिशि प्रकाशमानमेकनक्षत्रमिव सुदूरव्यवहितं विभातिस्म । महात्मनः पुरः प्रज्वलतोऽग्निकुण्डस्य मन्देन तेजसा महात्मनः शरीमप्यस्पष्टं लक्षितम् । पार्श्वे उपविशन् मेघश्यामस्तु चित्रलिखित इव तूष्णीमासीत् । कशाऽभिहत इव सद्यः प्रकृतिस्थितोऽहमभवम् ।

यथा कश्चित् सुखस्वप्नं दृष्ट्वाऽकस्माज्जागर्ति, तस्यैव मम दशाऽभूत् । शनैः शनैर्मम सर्वाः शक्तयः परावृत्ताः । "वत्स ! निर्वाणोन्मुखे दीपे तैलं

देहि" इति महात्मनो गभीरा वाक् श्रवणपथमुपगता। तदाकर्ण्य मेघश्यामः सुप्तोत्थित इव गत्वा दीपे तैलं ददौ। तैलनिषेकाल्लब्धबलो दीपः कुटीगतेन तमसा योद्धुमारभत। प्रकाशाऽभूत्कुटी। मया दृष्टम् महात्मा तथैव गम्भीरो निर्विकाराकृति यथास्थानं स्थितोऽस्ति। मया कम्पमानगिरा पृष्टम्—"भगवन्! केयं लीला? कीदृशोऽयमद्भुतो व्यापारः, यद्दृश्यं मया दृष्टम्, तत्किमंशतोऽपि सत्यम्? उत भिक्षारविलसितम्? कथ्यतां भगवता। छिद्यतां त्वरितमसौ मम संशयः"।

महात्मा सस्मितं जगाद—"वत्स! यत्त्वया दृष्टम्, तत्सर्वथा सत्यमेव, यत्त्वया द्रष्टुमिष्टम्, यच्च पृष्टम्, कीदृशीं भार्यामहं कुत्र लभेय" इति, मया तस्यैवोत्तरं दत्तम्। अपि सम्पन्नस्ते सन्तोषः?"

अहमवदम्—"सन्तोषः, न हि भगवन्! भूयानसन्तोषो मयाऽधिगतः, पूर्वापेक्षया शतगुणिता मे चिन्ता संजाता। इदमभिधीयतां भगवता—कुतः सर्वमिदं सम्पन्नम्? ईदृक् चित्रं मया कथं द्रष्टुं पारितम्, यत्र सर्वाणि पात्राणि जीवन्तीव चेष्टन्तेस्म। किमीदृग्विधमिन्द्रजालं सम्भवति?"

महात्मा स्थिरगिरा बभाषे—"कुतो न सम्भवति चेत् कथं दृष्टवानसि। मया पूर्वमेवोक्तमासीत् यदिच्छाशक्तिमहिम्ना सर्वमपि सम्भवतीति। तदेव इच्छाशक्तिमाहात्म्यं मया तुभ्यं प्रदर्शितम्। अलम्, नातः परं तव कोऽप्यर्थः। अहमधुना विश्रान्तिमिच्छामि।"

मया प्राञ्जलिना सविनयमभिहितम्—"भगवन्! बाढमुपकृतो भगवता। भगवतः प्रसादादेव इममद्भुतं व्यापारं द्रष्टुमहमपारयम्। इदमेकमे-

वापरमहमत्र बोद्धुमिच्छामि, मया तदानीं यद् धूमशकटीविश्रामधाम दृष्टम् यत्र धूमशकटी स्थिराऽऽसीत् किं नामधेयं तत् ?"

महात्माऽगादीत्—" वत्स ! नातः परं किंचिदप्यहं विवक्षामि, तव प्रार्थनया यावन्मया कथितं, दर्शितं च तावदेव बहु मन्यस्व । कदाचिन्ममैतेन व्यापारेण जगन्नियन्तुः संसारचक्रगतेः किञ्चित् प्रयोजनं सम्पादितं स्यात् यदिदमेतावन्मया त्वदर्थं प्रयतितम् तदपि तव मित्रस्य मेघश्यामस्य कारणात् । मेघश्याम ! मया नाद्य यावत् ते कथितम् अद्य प्रातर्यदा त्वमत्रागतः, तदा वक्तस्तव मुखात्तव पितुर्नाम श्रुत्वा त्वामहं विज्ञातवान् । तव पिता किल बाल्ये मम सतीर्थ्य आसीत् । आवां पूज्यपादस्य स्वस्मात्प्रदाचार्यस्य गुरोः पाठशालायां सहैव वेदाभ्यासमकरवाव । तव पिता तु गुरुगृहादुपावर्त्य गार्हस्थ्यमाचरत् । अहं हि शाश्वते ब्रह्मणि स्थित्वा गुरोरादेशमनुसरन् तीर्थाटनं करोमि । द्वादशवत्सरेभ्यः पूर्वं यदाहमत्रागमम् तदा तव पिता अष्टवर्षवयस्केन त्वया सह मां द्रष्टुमागत आसीत् । अस्तु । तव सन्तोषायैव मयाऽस्य तव मित्रस्य प्रश्नानामुत्तराणि दत्तानि, दर्शितं च यत्नेन द्रष्टुमिष्टम् " ।

मेघश्यामः प्रणम्य बभाषे—" भगवन् ! न मम विदितमासीत् स्वर्गवासिना मम तातेन सह भगवतः सौहार्दम् । मम तातः कदाचिद्वार्ताप्रसङ्गे स्वसतीर्थ्यस्य कस्यापि महानन्दब्रह्मचारिणो विषयेऽद्भुताद्भुतमितिवृत्तं कथयति स्म, किं तद्भगवन्तमभिकृत्यैव भवेत् ।"

महात्मा सस्मितमभाषत—" हुम्, अलमनया प्रसङ्गानुप्रसक्तया कथया । अस्ति वा किमप्यन्यत् ते प्रष्टव्यम् । "

मेघश्यामः पुनरब्रूत—"! भगवन्तं दृष्ट्वा सुरलोकात्प्रत्यावृत्तं पितरमहं पश्यामीव। भगवदनुग्रहान्न किञ्चिदपि मे न्यूनम्। धर्मे मम मतिस्थिराऽस्त्वित्येव मे प्रार्थनीयम। अयं मम सखा ललितकुमारः क्वापि न विश्वसिति, धर्मकर्मादिकं सर्वमपि पाखण्डं मन्यते! प्रायः प्रत्यहं मया सह विवदते। मां च मूर्खं भणति। भगवताऽस्य संशयं छित्वा बहूपकृतम्। चेत्कापि सेवा समादिश्येत भगवता, नूनमात्मानं धन्यं मन्येय। श्वः पुनर्भगवतो दर्शनं भविष्यति।"

महात्माऽब्रूत—"मम हि सर्वमप्यनिश्चितमेव, कदाचित् श्व एवेतः प्रस्थास्ये। परन्तु युवाभ्यामितः परमत्र नागन्तव्यम् न चैतर्हि दृष्टस्याद्भुतव्यापारस्य विषये क्वापि चर्चा विधेया। एष वृत्तान्तः परेषां कर्णौ गतो न मे रोचेत। श्रुत्वाऽपीत्थंविधं वृत्तमश्रद्धालवः परिहासं वितन्वते। अतोऽश्रद्धालुभ्यो बाढं गोपनीयोऽयं विषयः। अलम्, सम्प्रति युवां गच्छतम्। मङ्गलमयो महेश्वरो युवयोर्मङ्गलं करोतु। इहागतयो र्युवयोर्भूयान् विलम्बो जातः"।

अथ महात्मानं साष्टाङ्गं प्रणम्य आवां कुटीराद्बहिरागच्छाव। स्तोकं मार्गमतिक्रम्य मया मेघश्यामोऽप्राच्छि—"कथय, सखे! यत्किञ्चिद् दृष्टं तत्र, तद्विषये कीदृगभिप्रैषि।"

मेघश्याम उवाच—"मया तु नैव किमपि दृष्टम्, किमहंकथयेयम्।"

मया साश्चर्यमभिहितम्—"अरे! त्वं परिहससि किम्। तत् धूमशकटीविश्रामधाम दृश्यम्, सा च पीताभां शाटीं वसाना युवतिश्च किं त्वया न दृष्टा।"

मेघश्यामो गम्भीरभावेनावदत्—"सत्यमहं वदामि, अहं तव पार्श्व एवोपाविशम् मम तु तस्मिन् मन्दप्रकाशे त्रिपादिकावस्थापितं मृत्खण्डं विहाय नान्यत्किमपि दृक्पथमुपगतम्। त्वमेव कथय, किं त्वया दृष्टम्, अहमपि तच्छृणुयाम्। तत्र महात्मनः सन्निधौ त्वां किमपि नाप्राक्षम्"।

मया यद्यत्तत्र समवालोकि, तत्तदशेषं मेघश्यामाय सविस्तरं कथितम्। आकर्ण्य सोऽवदत्—"महात्मन एवायं महिमा, तस्यैव कृपया त्वं तद् द्रष्टुमशक्नोः, त्वयावलोकिते दृश्ये सत्यमेव किं सर्वाण्यपि पात्राणि जीवन्तीव चेष्टमानान्यासन्, अथवा तत्र केवलं सदृगभ्रम एवाऽऽसीत्।"

मया सनिर्द्धारमुक्तम्—"सर्वाण्यपि पात्राणि जीवन्ति चेष्टमानानि दृष्टानि नात्र संशयावकाशः। सा तरुणी त्वतीवाश्चर्यास्पदमासीत्। अहं हि यावज्जीवं तत्स्वरूपं विस्मर्तुं न शक्ष्यामि। अपूर्वं तत्सौन्दर्यम्, अहं बाढं विचारयन्नपि नावगच्छामि, कथमित्थं मया द्रष्टुमपारि। महात्मना च केन बलेन तस्मिन् मृत्खण्डे विचित्रं तन्नाटकं प्रदर्शिम्। अहं मन्ये, स महात्मा सम्भवतः किंचित् 'मेस्मेरिजम' नामिकां त्राटकविद्यामपि जानाति, तन्मायायामेवाहमपतम्।"

मेघश्यामोऽभ्यधात्—"पुनरारूढा संशयपिशाचिका त्वाम् बलवान् खलु संस्कारः महात्मनो योगशक्तेरीदृशं लोकातिगं चमत्कारं दृष्ट्वाऽपि त्वं कथयसि, "मेसमेरिजम" नामक त्राटकविद्यां जानातीति। अस्तु स किमपि जानातु न वा, अल्पैरेवाहोभिस्तस्य कथनं सत्यमसत्यं वेति ज्ञास्यसि।"

अहमवदम्—"हुम्, सत्यमिदम्, दशपञ्चदिनैरेव तस्योक्तं कथनं

मृषेति प्रमाणीकृतं भवेदेव "। तेनोक्तम्—अधुना ते विवाहयोगो नास्तीति, तदपि विवाहे सम्पन्ने वितथं भवेदेव। तदानीं तद् दृश्यं मया सत्यमित्येवावगतम्। परन्तु सम्प्रति सा तस्य मायाविनो मायैवासीदिति चिन्तयामि। कस्यापि पुरः स्वमायाबलेन काल्पनिकं चित्रमेकमुपस्थापयितुं स समर्थोऽस्तीत्यहं मन्ये। परं तु तेन प्रदर्शितं चित्रं सत्यमस्ति भविष्यज्जीवनेन सह तस्यास्ति सम्बन्ध इति तु नाहं विश्वसिमि। दशपञ्चदिनैरेव तस्य वचसां सत्यत्वमसत्यत्वं वा स्वयमेव ज्ञातं भवेत्। तस्य सिद्धत्वं त्रिकालदर्शित्वं महात्मत्वं च समय एव समर्थयिष्यति। तस्मिन् पुरुषे वर्तते कोऽपि विशेषगुण इति तु स्वीकारोमि।"

मेघश्यामो ऽब्रूत—"वरम्, भवता एतावदपि स्वीकृतम्, कदाचित्समय इतोऽप्यधिकं त्वत्तः स्वीकारयिष्यति।"

अहं गृहं प्रत्यागमम्। रात्रे द्वितीयप्रहर आसीत्। तदानीमपि गृहे सर्वेऽपि विवाहप्रबन्धव्यग्रा जाग्रतिस्म। दैवज्ञैर्निर्णयः श्रावितः। निर्द्धारितायाः कन्यायाः पिताऽपि सूचित आसीत्। शीघ्रातिशीघ्रं प्रथमे मुहूर्त एव विवाहो भवत्विति सर्वेषां मनीषाऽऽसीत्। मम महात्मनः सन्निधौ गमनम्, तत्र विचित्रदृश्यदर्शनमित्यादिकं किमपि गृहे कस्यापि न कथितम्। तस्मिन् दृश्ये दृष्टां तां तरुणीमेव चिन्तयन्नहं शयनार्थं पर्यङ्कमुपारुहम्। शनैः शनैर्निद्राऽधीनोऽभवम्।

(४)

महति प्रत्यूष एव कस्यापि रटितमाकर्ण्य मम निद्रा भग्ना। 'ललित!

ललित ! उत्तिष्ठ वत्स ! " अहमुत्थाय पर्यङ्के समुपाविशम् । समीपे स्थितां जननीं चापश्यम् । मया पृष्टम्—"किमम्ब ! किमस्ति ।"

सा जगाद—" वत्स ! तन्त्रीसन्देशवाहकः समागतः, हस्ताक्षरं कृत्वा सन्देशपत्रं गृहाण ।"

तन्त्रीसन्देशः ! कीदृशस्तन्त्रीसन्देशः ! कुतः समायातः । केन प्रेषितः । श्रुत्वैव सम्भ्रमे पतितं हृदयम् । आशङ्कया कृतमास्पदम् । सयो महात्मनो वचनं मे स्मृतिपथमायातम् । तेन हि कथितमासीत्—"कृतेऽपि प्रबले समुद्योगे न भवेत्ते विवाहः यतस्तस्यावसरो नाधुना प्राप्तः " इति । तत्किमेष तन्त्रीसन्देशः किमपि विघ्नरूपं भूत्वा समागतः ।

इत्थं स्वमनो दौर्बल्यं कलयित्वाऽहमहसम् । स्वमनोभावान् गोपाय न्नेव मातरं पृष्टवांश्च—" किं मातः ! तातो गृहे नास्ति किम् ।"

साऽब्रवीत्—" नहि वत्स ! महति प्रत्यूषे त्वय्यनुत्थिते एव विवाह-मुहूर्तविषये समालपितुं ते दैवज्ञसमीपं गताः सन्ति ।"

अहमुत्थाय बहिरागमम् । हस्ताक्षरं कृत्वा तन्त्रीसन्देशमादायाऽवाचयम् । तत्र लिखितमासीत्—

" पिता गतदिनमारभ्य सविशेषं रुग्णोऽस्ति, रोगमुक्तेराशा नास्त्येव, सन्देशं प्राप्यैव त्वरितमागम्यताम् ।

कुबेरप्रसादः ।

स तन्त्रीसन्देशो मन्नाम्ना मम स्वामिनः कर्णपुरवस्त्रयन्त्रालयाध्यक्षस्य धनपतिप्रसादस्य पुत्रेण कुबेरप्रसादेन प्रेषित आसीत् । श्रेष्ठिनो धनपति

प्रसादस्य किमकस्मात्सञ्जातम् । यदाहं मासिकमवकाशमाप्य ततः प्रातिष्ठे तदा हृष्टपुष्टो नीरोग आसीन्मम स्वामी उक्तं चासीत्तेन—"ललितकुमार! यावच्छक्यं शीघ्रमेव परावर्तस्व जानास्येव नास्ति त्वामृते ऽन्योऽत्र यन्त्रविशेषज्ञ इति।" यान्त्रिकी दुर्घटना वा काचित्संजाता । कस्मिंश्चिद्प्यसाध्ये व्याधौ वा ग्रस्तो मम स्वामी ।

इत्थं विचिन्तयन् शिरोविन्यस्तहस्तोऽहं तत्रैव क्षणमतिष्ठम् । मम स्वामिनो धनपतिप्रसादस्य सौजन्यमनुजीविवत्सलतां दयालुतां गम्भीरतां कार्यकौशलं शिष्टतां च चिन्तयतो मम नेत्रे बाष्पपूरमवर्षताम् । मां चिरयन्तं वीक्ष्य प्रतीक्षमाणा मे माताऽभ्यन्तरप्रकोष्ठादेव मामुच्चैः पप्रच्छ—"वत्स! केन प्रेषितो वैद्युतः सन्देशः। कुतो वा समागतः।" अहं गद्गदस्वरेणोत्तरितवान्—"मातः! अहमभ्यन्तरमागच्छाम्येव।" अहमात्मानमवष्टभ्य मातुः समीपं गत्वा तस्यै तन्त्रीसन्देशवृत्तं सर्वं न्यवेदयम्। सा साश्चर्यं सचिन्तं च जगाद—"इदमनवसरं घोरमनिष्टमुपस्थितम्, त्वं त्विदानीं तत्र गन्तुं नार्हसि, कमपरं तत्र प्रेषयिष्यसि।" मयोक्तम्—'ममैव स्वयं तत्र गन्तुमत्यन्तमावश्यकम्। यंत्रालये मां स्वामिनं च विहाय नास्ति कोऽपि विशेषज्ञः, अन्येन केनापि तत्र गत्वा किं साधयिष्यते। किं च स्वामिपुत्रेण कुबेरप्रसादेन चाहमेव तत्राऽऽहूतोऽस्मि।" माताऽब्रूत—"तह्यत्र किं भवेत्। विवाहप्रबन्धः सर्वोऽपि सिद्धोऽस्ति, निश्चिते मुहूर्ते न चेद्विवाहः सम्पद्येत, वयमत्र मुखं दर्शयितुं न शक्ष्याम। तव गमनं बाढमावश्यकं चेद्विवाहानन्तरं चतुर्थेऽहनि गमिष्यसि।"

मयोक्तम्—"अम्ब ! यथा त्वमादिशसि तथैव चेत्कर्तुं शक्नुयाम् बाढं प्रमोदेय, परन्तु विचारय, तन्त्रीसंदेशे लिखितमस्ति, मम स्वामी सातिशयं रुग्णोऽस्ति, रोगमुक्तेराशा नास्ति" इति । इत्थंगते व्यतिकरे विवाहार्थं मत्रावस्थानं मम शोभेत किम्, यस्य स्वामिनो मयाऽद्य यावल्लवणं खादितम्, मृत्युशय्यां गतेन तेनाऽऽहूतोऽहं चेद्विलम्बेय, उभयलोकभ्रष्टो भवेयम् । त्वमेवेत्थं सकलं विचार्य समुचितं समादिश मे कर्तव्यम् ।" माता तूष्णीमास । किं वा सा भणेत् ? तूष्णीं स्थिताया अपि तस्या वदनविकारैर्मया तन्मनोगतमवगतम् । सा किल चिरान्मम विवाहविषये प्रयतमानाऽऽसीत् । एतावत्पर्यन्तमहमेव विवाहप्रतिबन्धकोऽभूवम् । अथ कथं चिन्मयाऽभ्युपगते विवाहप्रस्तावे सज्जे च सकले सम्भारे इदमपरमतर्कितं प्रबलं प्रतिबन्धकमुपस्थितम् । तस्या अक्ष्णोरश्रूण्युपस्थितानि । अहं कथंचित् हृदयमवष्टभ्य स्वकीयं प्रकोष्ठमुपागाम् । तत्र आरामनेत्रासनेऽहं शयानो व्यचिन्तयम्—"पश्यत, कथमाकस्मिकी दुःखदेयं घटना समुपस्थिता । मुहूर्तात्पूर्वं मया इदमित्थं भावीति स्वप्नेऽपि न चिन्तितमासीत् । मेघश्यामेन सह केवलं कौतुकबुद्ध्या तस्य महात्मनः सन्निधिमुपगम्य यत्तस्माच्छ्रुतम्, तदिदानीं सत्यमिव प्रतीयते । नूनं तस्मिन्नस्ति कापि विशेषशक्तिः । किमहं तं पुनरुपगम्य मम स्वामिनो विषये पृच्छेयम् । परन्तु तेन पुनर्दर्शनं निषिद्धमस्ति । किं कुर्याम् ?"

अत्रान्तरे तातेनागत्य सर्वोऽप्युदन्तः श्रुतः । मम स्वामिना धनपति-

प्रसादेन सह मातस्य चिरन्तनं सौहार्दमासीत् । स्वामिनो रुग्णतावृत्तान्तेन तातस्य चित्तं परं व्यथितं बभूव । तेन विधूय मोहं, विवाहसम्भारव्यर्थता मप्यविचिन्त्य स्पष्टमेवाहमभिहितः—"वत्स ! ललित ! त्वं जानास्येव, यद्वि-गतमासद्वयात्प्रभृति तव विवाहविषये प्रयत्यते पर्याप्तमत्र धावितं परिश्रान्तं च, द्रव्यमपि पुष्कलं व्ययीकृतम् । किञ्च तव माता तव विवाहविषये कीदृ-गुत्कण्ठितास्तीत्यपि तव नाविदितम् । अस्मिन् वारे यच्छुभकर्माऽकृत्वा सा न तूष्णीं स्थास्यति । इत्थमपि तव कर्तव्यमप्यहं वेद्मि । यदि त्वं साम्प्रतं विवाहविचारं परित्यज्य कर्णपुरं जिगमिषसि तर्हि नाहं त्वां प्रतिरोद्धुं शक्नोमि" ।

मयोक्तम्—"तात ! विवाहस्तु यदा कदाऽपि भवितुं शक्नोति, परं तु मृत्युशय्यां गतो मनुजः शुभाशुभकार्यं न प्रतीक्षते । ईश्वरो येन पथा चाल-यति तेनैव पथा गन्तव्यं भवति । यद्यस्मिन्नवसरे नाहं तत्र गच्छेयम् तर्हि कर्तव्यभ्रष्टो भवेयम् कदाचिदाजीविकामपि हापयेयं च" ।

तातोऽब्रवीत्—"एवं तर्हि त्वरितं गम्यताम् । मध्याह्नोत्तरगामिना धूम-शकटेन गन्तुमर्हसि । तत्र गत्वैवाखिलमुदन्तं मे सूचय । यदि श्रेष्ठिन आ-रोग्यलाभो भवेत्तर्हि वरमेव, त्वरितमेव ततः प्रत्यागमिष्यति सः । यद्यन्यथा भवेत्तर्हि तदपि सकलं सूचय ।"

अस्मिन्नेव दिनेऽहं कर्णपुरं प्रातिष्ठे । यन्त्रालयप्रधानकार्यालयं गत्वैव सर्वं वृत्तमवगतम् । श्रेष्ठी धनपतिप्रसादः कमप्यागन्तुकं सुहृदं यन्त्रालयं

दर्शयन्नेव दुर्भाग्यादनवधानतया प्रचलितयन्त्रे पतितः, यद्यपि तत्कालमेव यन्त्रगतिर्न्यरुद्ध्यत, तथाऽपि यन्त्राग्रकरपत्रैस्तस्य द्वावपि चरणौ विच्छिन्नौ। वैद्यै र्जीविताशा परित्यक्ता, श्रेष्ठिनं मां च विहाय न कोपि यन्त्रविशेषज्ञ आसीदित्यग्रिमकार्यनिर्वाहाय श्रेष्ठिपुत्रेणाहं तन्त्रीसन्देशद्वारा समाहूतः। सर्वोऽप्ययं वृत्तान्तो मया ताताय निवेदितः, इदं चापरं लिखितम्, यन्मम शीघ्रं प्रत्यावर्तनं न सम्भवेत्। एकादशदिनानि यावन्मम स्वामी जीवन-निधनयोरन्तर्लम्बमान आसीत्। यावन्मानवबुद्धेर्बलमस्ति, विज्ञानेन च या-वन्त उपाया आविष्कृताः सन्ति, ते सर्वेऽपि कुबेरकल्पेन कुबेरप्रसादेन निज पितुः कृते प्रयोजिता। पानीयमिव द्रव्यं प्रवाहितम्। मृत्युमुखात्तमाच्छेत्तु काऽपि चेष्टा नावशेषिता। परन्तु दुर्भाग्यं सर्वोपरिष्टादासीत्। द्वादशे दिवसे श्रेष्ठिनः प्राणाः प्रतस्थिरे।

ततः परं कतिपयदिनानि महता सङ्कटेनातिवाहितानि। कियन्तः कीदृशाः प्रबन्धाः कर्तुमापतिता इत्यादि वर्णनमनुपयुक्तमिति न करोमि। प्रायः सार्द्ध मासात्मकः कालस्तस्मिन्नेव सम्भ्रमेऽतिक्रान्तः। श्रेष्ठिपुत्रो निसर्गतश्चतुर आसीत्। पितरि जीवत्येव तेन कार्यालयस्य बहुलः कार्यभारः स्वायत्तीकृत आसीत्। अथेदानीं मम मन्त्रणानुसारेण तेन सर्वोऽपि प्रबन्ध आमूला-न्नवीकृत। अहं च प्रधानाध्यक्षपदे नियुक्तः।

अत्रान्तरे मया काश्यां न गतम्। तातस्य तु प्रतिसप्ताहं कुशलपत्रा-ण्यायान्त्येव। मेघश्यामस्य पत्रेण मयाऽवगतम्, यन्मदर्थं निर्द्धारितस्य

कन्यात्रयस्याप्यन्यत्र विवाहः संवृत्त इति । न च तेन मम स्वल्पोऽपि विषादः समजनि । मेघश्यामेन स्वपत्रे इदं चान्यल्लिखितमासीत्, यन्मम माता मम विवाहार्थं पुनरपि सर्वात्मना प्रयतमानाऽस्तीति । वर्षानन्तरमागामिनि प्रथमे विवाहमुहूर्त एव मम विवाहस्तयाऽवश्यं कर्तव्यत्वेन निर्द्धारित इति च ।

महात्मनः कुट्यां मेघश्यामेन सह गमनम्, तत्र महात्मनः प्रभावादद्भुत दृश्यावलोकनं च नाहं व्यस्मार्षम् । न च विस्मर्तुमपारयम् । केवलं कौतुकेनैव मया तदानीं तत्र गतमासीत् । अविश्वासेनैव तदुक्तमाकर्णितम् । परन्तु यतः प्रभृति महात्मन उक्तिषु एकस्यांशस्य सत्यता बाढमनुभूता, ततः प्रभृति महात्मनो विषये मम हृदये काऽपि श्रद्धा समुदभूत् । ईदृशाः सिद्धपुरुषाः प्रविरला एव दृश्यन्तेऽस्मिन् संसारे । सौभाग्येनैव तथा विधानां समागमो भवति, सांसारिकेष्वपि विरला एव तथाविधान् सिद्धान् परिचिन्वन्ति । ते हि अकस्मादेव कुतोऽप्याविर्भवन्ति, अकस्मादेव च कुत्रापि प्रगाढे तमसि निलीयन्ते । स गङ्गातटवासी महात्मा इदानीं कुत्राऽस्तीति को वेद ? एवं वर्षानन्तरं यया कन्यया सह मम विवाहस्य भावित्वं तेनोक्तमासीत् न्नरसत्यं भवेन्नवेत्यनुभवितुं बाढमासीन्ममोत्कण्ठा । तस्य कुटीरे कावतामापन्ने तस्मिन् मृत्खण्डे यद् दृश्यं मया दृष्टमासीत्, जीवन्त इव चेष्टमाना ये वाऽऽकृतिविशेषास्तत्र मया दृष्टास्ते खलु मम हृदये निखातप्राया इवासन् । तन्मुखम्, ते नेत्रे, सा शुकचञ्चुनिभा नासा, स च अत्यन्तपाकद्रवद्द्राक्षासमकक्षोऽधरः, किमेतानि विस्मर्तुं शक्यानि ? चतुरादपि चतुरश्चित्रकारो नेदृग् रूपं निर्मातुं शक्नोति । किमेतादृशी सुन्दरी कापि भ्रियते उत महात्म-

नः कल्पनाविजृम्भितमेतदेव ? अस्तु द्रष्टव्यम् ! एकवर्षात्मको न भूयान् कालः । यतस्तस्यैक वचनं सत्यमभून् ततः परमपि सत्यं भवेदिति बहुशः सम्भाव्यते ।......

अतीताः कतिचिन्मासाः । मम विवाहकथाऽवसानस्य, धनपतिप्रसादनिधनस्य यन्त्रालये प्रधानाध्यक्षपदे च मम कार्यं कुर्वतश्च पश्चषा मासा व्यतीयुः । मम हृदये च आशानिराशे परस्परमयद्ध्येताम् । एवमेव भूयोऽप्यतीतः कश्चित्कालः । परन्तु मया मृत्खंडे दृष्टं तद् दृश्यं, सा सुन्दरी च न मनागपि विस्मृता । ततः परमकस्मादेकस्मिन् दिने निजेन वास्तविकरूपेण तद् दृश्यं—महात्मनः प्रसादात् मृत्खंडे दृष्टम्-मम पुरः स्वयमुपस्थितम् । कदा-कथं च,- तदेवाहमग्रे वर्णयामि ।

( ५ )

यन्त्रालयविशेषकार्यवशान्मम लवपुरे गन्तुमापतितम् । कर्णपुरात्प्रस्थानात्पूर्वमेव मया मातुरेकं पत्रमधिगतम् । तत्र लिखितमासीत्—

"चिरायुष्मन्तं वत्सं ललितकुमारं सस्नेहमाश्लिष्य मूर्ध्न्युपाघ्राय च शुभाशीराशिभिरभिवर्द्धयन्ती तन्माता काशीतः प्रतिबोधयति ।

वत्स ! इतो बहुदिनेभ्यो नाधिगता ते कुशलपत्रिका । आशंसामि त्वं कुशली स्या इति । अग्रे—आवश्यकमेकं विषयं स्मारयितुं ते पत्रं लिखामि । त्वं जानास्येव, यदतीते वत्सरे तव विवाहसम्भारेषु सन्नद्धेष्वेव अकस्मात् स्वामिनो निधनेन विवाहो विघ्नित इति ।

अथेदानीमहमिच्छामि, यदागामिनि प्रथमे विवाहमुहूर्ते एव कार्यमिदं सम्पादनीयमिति। अस्मिन् वारे तव किमपि प्रतिबन्धकं कैतवं वा न मया मनागपि विचारयिष्यते। अतस्त्वामधुनैव चेतयामि। त्वदर्थं मयैका कुलीना शिक्षिता च सुन्दरी कन्याऽवधारिताऽस्ति। अत्रत्यैव सा। विश्वसिमि चाहं यत्त्वं मम वचनं पूरयिष्यसि। किमपि कैतवं न करिष्यसि। यद्यस्मिन् वारेऽपि किमपि कपटमुद्भाव्य मम वचनं न पूरयिष्यसि, तर्हि मम भूयान् मनस्तापो भवेत्। सत्यवकाशे द्वित्रिदिनार्थमत्रावश्यमागच्छ। मया त्वां दर्शयितुं तस्याः कन्यायाश्छायाप्रतिकृतिरानायिताऽस्ति, सा त्वया द्रष्टव्या। आवामत्र सकुशलौ स्वः। वत्सस्य सर्वतः कुशलमिच्छावः।"

—"तव माता।"

इत्थं पत्रं पठित्वा ममाश्चर्यमभूत्। चिन्तितं मया—पश्यत, इयन्ति व्यतीतानि दिनानि, नाधुनाऽपि मातुर्मद्विवाहाभिनिवेशोऽपसृतः। अस्मिन् वारे तु मातुर्वचनं पूरयितव्यमेव। परन्तु तस्य महात्मनः सा भविष्यदर्शिवाक् किमपूर्णैव स्थास्यति? तेन तु मम भाविनी भार्या ग्रामान्तरीयेव दर्शितेति मम स्मृतिपथमायाति। मात्रा तु कापि काशिकैव कन्याऽवधारिताऽस्ति। भवतु द्रक्ष्यामि किमस्ति भाग्ये लिखितमिति। महात्मनो वचनं मिथ्या भवेदिति तु विश्वासो न भवति।

अथाहं लवपुरमुपागमम्। तत्र यन्त्रालयकार्यविशेषसम्पादने प्रयतमानस्य मे पञ्चदश दिनान्यतिजग्मुः। कार्यमपि समपद्यत। ततः परावर्तमाने

ऽहं मध्ये मार्गं मथुरायामवातरम्। अदृष्टपूर्वेयं पुण्यपुरी दृष्टव्येति चिरा- न्मम मनीषाऽऽसीत्। दृष्ट्वा च तां भगवतो नन्दनन्दनस्य लीलाविहार- भूमिं मथुरां, गोकुलवृन्दावने च बाढमप्रीयत ममान्तरात्मा। तस्यां पुण्य- भुवि कोऽपि विशेषोऽस्ति, यः समृद्धेषु सुन्दरेष्वपि नगरान्तरेषु नोपलभ्यते इत्यश्रद्धेनापि ममान्तरात्मनाऽनुभूतम्। 'आगरा' नगरे दिनमेकमुषित्वा पुनरहं कणपुरं प्रस्थितवान्। मार्गे 'जनसम्मर्दपरिहारपुरस्सरं सुखेन यात्रा भव' त्विति मया द्वितीयश्रेणिप्रवेशपत्रं क्रीतमासीत्। तत्र व्ययस्तु भूयान् जातः, परन्तु यात्रा सुखेन समपद्यत। एतावत्पर्यन्तं मम प्रकोष्ठे अहमेवैकल आसम्। शकटी 'टुंडला' स्थानमुपागता, ततः 'शिकोहाबादम्'। 'भिड' स्थाने क्षणं विश्रम्य ततः परं 'इटावा' माजगाम शकटी। अत्र विंशतिकला मितं काल शकटी स्थास्यतीति विदित्वा अहमवातरम्। इतस्ततो दत्तदृष्टिः पुरः प्राङ्गणे पर्यटितुमारभे। विहङ्गमदृशा एकवारं तत्सकलं धूमशकटीविश्राम धाम सपूर्वापरं पर्यवेक्षे च। इत्थं परिवीक्षमाण एवाहमकस्माच्चकितोऽभवं चेतसि। इदं स्थानं तु मम परिचितमिव प्रतिभाति। अचिरेणैवेदं दृष्टं स्मरामि। परन्त्वहमनेन पथा न कदापि पूर्वमागत इति तु निश्चितम्। ओ······स्मृतम् स्मृतम्। स्मृतिमात्र एव मम तादृगपरिमितमाश्चर्यं समुद भूत् यथा तस्मिन् महति सम्भ्रमे क्षणं मम हृदयमपि निःस्पन्दतामगाहत। मया परिचितम् तदेवेदं स्थलं यन्मया तस्य महात्मनः प्रसादेन काचगोलता- मापन्ने मूरखण्डे दृष्टमासीत्। निःसन्देहं तदेवेदं स्थानम्, पुरः प्राङ्गणे

सैवेयं प्रकोष्ठपङ्क्तिः, स एवायं पंक्त्यन्तरगामी सेतुः, तदेवेदं सकलम्, यन्मयातत्तदानीं सकुतूहलमवलोकितमासीत्। अहो कीदृशीयं तस्य महात्मनो ऽचिन्त्या शक्तिः सत्यम् साधवो हि कर्तुमकर्तुमन्यथाकर्तुं समर्था भवन्तीति यथेदं दृश्यं सत्यस्वरूपेण मम पुरः समुपस्थितम् ? तथैव तदपि दृश्यं—सा सुन्दरी लोकोत्तरसुषमाशालिनी सा बालाऽपि किं मर्त्यस्वरूपेण मम पुरः समुपतिष्ठेत ? महात्मनो वचनस्यैकोंऽशस्त्विदानीं पूर्णः अपरोऽपि किमिति न पूर्णो भवेत ?

यावदहं सकौतुकं सोत्कण्ठं च प्राङ्गणस्येतस्ततो दत्तदृष्टिः पश्यामि, तावदेव मम दृष्टिः पंक्त्यवन्तरगामिनः सेतो सोपानमार्गे सहसा निरुद्धाऽभूत्। तत्र यद्दृश्यं मया दृष्टं, तेन भूतलात् दूरमहमुच्छलित इवाभवम्। क्षणं मोहो मां प्रावृणोदिव। सत्यमेव निरुद्धा हृदयगतिः। अक्ष्णोरप्यविश्वासोऽभूत्। मया समुच्छलता चेतसा विस्फार्य नयने च सम्यङ् निर्वर्ण्य दृष्टम् सैव सुन्दरी मदभिमुखमायान्ती प्रतीयतेस्त, या मया महात्मनः कुट्यां कापगोले दृष्टपूर्वाऽऽसीत्। मया पुनः पुनर्नयने प्रमृज्य विस्फार्य च सा निर्वर्णिता। सैवाऽऽसीदिति निश्चयेनावगतम्। सैव पीताभा शाटी, सैव गजगतिः, ते एव विशाले नयने सैव किञ्चित्तिरश्चीना नासा, स एव चात्यन्तपाकवद्बिम्बसपत्नोऽधरोष्ठः। कुत इयमुपागता ? किमहं स्वप्नवृत्तं पश्यामि सत्यमेव वाऽसौ सुवर्णप्रतिमा ममाभिमुखमुपागच्छति ? सहसा मम सर्वे अपीन्द्रियवृत्तयो नयनपथमवतीर्णा इव। पश्यत एव मे सा युवतिर्मया-

ऽधिष्ठितपूर्वं द्वितीयश्रेणिकं प्रकोष्ठमेवारोहतिस्म। सा एकला नासीत् तया सह समुज्ज्वलनेपथ्या काऽप्यपरा प्रौढा योषिदपि तमेव प्रकोष्ठमारुरोह। तयोः पश्चादेकोऽनुचरः शिरस्यायसीं मञ्जूषां, करे चर्मपेटिकां च वहन् तत्रैव जगाम। अहं प्रवेशद्वारोपकण्ठं स्थित्वा ते निरवर्णयम्। अनुचरेण लौहमञ्जूषा तूपरितनपट्टिकायां निहिता। स्तरं विस्तारितम्। मृत्कुम्भे च पानीयमापूरितम्। दर्शनेन ते उभे अपि सत्कुलीने प्रत्यभाताम्। यतः सा युवतिः परिहृत्यावगुण्ठनदम्भं तत्र निःशङ्कमतिष्ठत्, ततः सा शिक्षिता नव्यमतानुगा चाऽऽसीदिति निर्विवादमेव। द्वितीयश्रेणिकप्रकोष्ठारोपणात्तस्या धनिकताऽपि निश्चितैवासीत। अत्रान्तरे धूमशकटीप्रस्थानसूचकः कलचीत्कारः श्रूयतेस्मअहमपि सलज्जं सभयंच प्रकोष्ठान्तः प्रविश्य स्वस्थाने समुपाविशम्। मम नेत्रे हठात्तामेव सुन्दरीमन्वधावताम्। मृत्खण्डे दृष्टाया आकृतेस्तया सह सर्वात्मना संवादं दृष्ट्वाऽभूतपूर्वमाश्चर्यमहमन्वभवम्। चिराय तन्मुखनिर्वर्णनमसभ्यतास्पदं भवेदिति मया स्वोपबर्हतले निहितं तद्दिनस्य संवादपत्रं मुखाग्रे धृतम्। अत्रान्तरे युवत्याः सहचरी प्रौढा योषिन्मदन्तिकमेत्य मामपृच्छत्—"महाशय! उपरितनपट्टिकायां निहितं वस्तु

जातं भवत एवास्ति किम् ?" मया स्वीकारसूचकं शिरःकम्पं विदधता "आम्, तन्ममैवाऽस्ति" इत्युत्तरितम् । भूयः सा पप्रच्छ—"कुत्र गन्तव्यमस्ति भवतः ?" तां निःसङ्कोचं भाषमाणां दृष्ट्वा मयाऽपि लज्जाकरणमनुचितमवधार्य निर्भयं प्रतिभाषितुमारब्धम् । कदाचिदस्मिन् संलापे तस्यास्तरुण्या नामधामादिकं विवाहितत्वाविवाहितत्वं च ज्ञातं भवेत ।, मयोत्तरितम—"कर्णपुरमहं गच्छामि ।"

साऽब्रूत—"ओ..................तर्हि भवान् प्रथममेवावतरिष्यति । आवयोस्तु काश्यां गन्तव्यमस्ति ।"

साश्चर्यस्य मम मुखादकस्मान्निर्गतम्—"किं काश्याम् ?" तया पृष्टम्—"काशीनाम श्रुत्वैव किमिति विस्मितो भवान् ?"

यद्यपि प्रौढयैव साकं ममैष संवादः प्रचलन्नासीत्, तथाऽपि सा युवतिरपि मध्ये मध्ये सलज्जां दृशं मयि क्षिपन्ती संवादे दत्तकर्णाऽतिष्ठत् । मयोत्तरितम्—"विस्मयस्य हेतुरयमेव, यदहमपि काश्यामेव वसामि । तत्रैवास्ति ममाऽपि गृहम् ।" ततः परं प्रौढया सह चिराय मम वार्तालापोऽभवत् । संवादे कदाचित्सा युवतिरपि मध्ये मध्ये किंचिद्बभाषे—किन्तु

मया साकं न हि, तयैव प्रौढया साकम्। शिक्षितयाऽपि तथा सर्वथाऽपरिचितेन युवकेन सह सहसा सम्भाषणमनुचितमवधारितं स्यात्। अत्रान्तरे तस्या विषये मया प्रायः सर्वमपि ज्ञातम्। ते द्वे अपि काशिके एवास्ताम्। युवतिः प्रौढाया भागिनेय्यासीत्। प्रौढा च "इटावा" यां निवसति। युवतिश्चिराद् दृष्टां मातृष्वसारं सम्भावयितुं "इटावां गताऽऽसीत्। "काश्यां तव विवाहो निश्चितः त्वरितमागम्यताम्" इति पित्रा प्रहितं विद्युत्सन्देशमवाप्य मातृष्वस्रा सह काशीं गच्छति। आगामिषु विवाहमुहूर्तेषु तस्या विवाहो भविष्यति। वरः काशिक एव कश्चिन्निर्धारितोऽस्तीति।

युवतिं सम्यङ्निर्वर्ण्य मया निश्चयेनावगतम्—सैवेयं युवतिर्या मया मृत्खण्डे दृष्टासीत्। मृत्खण्डदृष्टतदाकृत्यपेक्षया वास्तविकीं तदाकृतिं शतगुणसौन्दर्यामवालोकयम्। सर्वभावेन तस्यां समाकृष्टश्चाभवम्।

मया मनसि चिन्तितम्—"तस्य महात्मनः कथनानुसारमन्यत्सर्वं सम्पन्नम्। तदेवेदं धूमशकटीविश्रामधाम, सैव चेयं सुन्दरी, परं त्वस्या विवाहः काशिकेनैव केनापि वरेण निश्चितोऽस्तीति शृणोमि। किमेतावत्पर्यन्तं सर्वमपि महात्मव-

चनं सत्यं सम्पन्नम्, शुल्यफल एव ममदौर्भाग्यात्ताद्विसंवदे सक्ति-म्? निश्चयेनाहं तं महात्मानं पाखण्डिनमाकलयेयम्।" इति।

"इटावा" तः कर्णपुरपर्यन्तं पन्थाः सुखेनातिक्रान्तः। पुनरहमचिन्तयं चेतसि—अस्याः पितुर्नामधामादिकं मया ज्ञातमेवाऽस्ति। स काश्यामेव वसति। तथा कोऽपि प्रयत्नो विधेयः यथाऽस्याः, पिता मयैव साकमस्या विवाहमारचयेत्। अस्तु, मातरं तावदुद्योजयिष्यामि। यथातस्य महात्मनो वाणी सर्वथा सत्या प्रमाणिता भवेत् तथैव मया प्रयतनीयम्।

इत्थं चेतसि चिन्तयन्नेवाहं यथासमयं कर्णपुरे समवातरम्। अवतरणसमये पुनरपि तस्यास्तरुण्याः पितुर्नाम निवासस्थानं च पृष्टा सा प्रौढा निःशङ्कं तत्कथयतिस्म। सा तरुण्यपि सलज्जैः कटाक्षवीचितैर्मामैक्षत। तद्विषयेऽहं ईदृगुत्कण्ठितोऽस्मीति सा कथं जानातु।

अस्यापि वृत्तान्तस्य सम्पन्नस्य बहून्यहान्यतीतानि। सा तरुणी सा प्रौढा च न मे स्मृतिपथादपासरताम्। ततः परमेकमासानन्तरमहं स्वगृहं काशीं प्रत्यागमम्। मया विचारितं चेतसि-यन्मार्गे दृष्टायास्तरुण्या विषये सर्वमपि मातुरग्रे प्रकटनीयम् कथनीयं च—यदनयैव साकमहं विवाहं करिष्यामि नान्यथा।

इत्थं च मम माता येन केनाप्युपायेन ममाभीष्टं विवाहं घट-यिष्यतीति। इत्थं विचिन्तयतो मम काश्यागमनादपरेऽह्नि मात्रा सह रहसि वक्तुमवसरः समुपनतः।

मया साहसपूर्वकमुक्तम्—"मातः! मम हि विवाहवि-षये किंचिद्वक्तव्यमस्ति।"

सा साश्चर्यं जगाद—"किं वत्स! किमस्ति वक्तव्यम्?" मयोक्तम्—त्वया निश्चितं मम विवाहमुद्दिश्यैव किंचिद्वि-वक्षामि।"

सा जगाद—"विवाहमुद्दिश्य किं विवक्षसि रे, किं पुनर्नकार पिशाचिका त्वामुपारूढा?"

अहमगदम्—"न हि, न हि, नकारपिशाचिका नोपारू-ढा। इदमहं विवक्षामि, भवत्या निर्द्धारितया कन्यया सह न मया विवाहः कर्तुमिष्यते।"

सा साश्चर्यमपृच्छत्—"किं कारणं वत्स! किं त्वया तस्या वि-षये कश्चिद्दोषः श्रुतः? मया तु तस्याः कुलशीलादिकं सम्यक् परिशीलितमस्ति। सा त्वतीव सुशीला वर्तते। किं कारणं तर्हि तव निषेधस्य?"

अहमवदम्—'न हि न हि, तस्या न कश्चिदपि दोषो गुणो वा मयाश्रुतः। वास्तविकी कथा त्वियम्—मया काऽप्यपरा कन्या स्वयं निश्चिताऽस्ति।''

माता ममैतेन कथनेन नभसः पपातेव। सविस्मयं चाह स्म—'वत्स! ललित! कथमिदं सम्पन्नम्, त्वं तु पूर्वं विवाहप्रस्तावमपि नाभ्यनन्दथाः, इदानीं स्वयमेव कन्या निश्चेतुमपि प्रवृत्तोऽसि। साम्प्रतिकानां यूनां पित्रोरपेक्षैव न भवति पठित्वा लिखित्वा च ते तथा चतुराः सम्पद्यन्ते, यथा पत्नीनिर्वाचनमपि मात्रा पित्रा वा कृतं नानुमन्यन्ते। अस्तु कथय, का कीदृशी च कन्या त्वया निश्चिता ?''

मया लज्जमानेनोच्चरितम्—"अत्रत्यैव सा कन्याऽस्ति। अस्माकं सजातीयैव। मया लवपुरात्परावर्तमानेन धूमशकट्यां सा दृष्टा। दशाश्वमेधवीथ्यां निवसतो नारायणप्रसादस्य सा कन्या किल।''

माता मुहूर्तं साश्चर्यं तन्मुखं निरैक्षत। ततः परमुच्चैर्जहास। अहं तु मातरमकारणं हसन्तीं दृष्ट्वा बाढं सम्भ्रमे न्यपतम्। मम कथने हि किमपि हासकारणं नासीत्। अथ मम माता ततस्त्वरितमुत्थाय स्वप्रकोष्ठं गत्वा तत एकं चित्रफलकमा

नीय मम हस्ते दत्त्वा सस्मितमपृच्छत्–' किमेतां कन्यामुद्दिश्यै व त्वं ब्रवीषि ?"

आश्चर्यातिरेकादहं किञ्चिदपि वक्तुं न प्राभवम्। मया दृष्टम्। तच्चित्रफलकं तस्या एव तरुण्या आसीत् या मया धूमशकट्यां, महात्मनः कुटीरे मृत्खण्डे च दृष्टाऽऽसीत् । मया कम्पमानस्वरेण पृष्टम्–"मातः! इदं चित्रफलकं तवान्तिके कुतः समागतम् । किं त्वमेतां कन्यां जानासि ?"

सा सशिरःकम्पं बभाषे—"आम, अवश्यमहं जानामि· यदहं न जानीयाम्,को वाऽपरो जानीयात्। अनयैव सह मया तव विवाहो निश्चितः। त्वां दर्शयितुमेवेदं चित्रफलकं मयाऽऽनायितमस्ति । मया पत्रेऽपीदमेव लिखितमासीत् । किं न स्मरसि ?"

किमहं वदेयम,कथं वा सर्वं वृत्तान्तं निवेदयेयम्-यदेकवर्षादिमां तरुणीमहं हृदये धारयामीति। परन्तु अयमद्भुतः संयोगः सम्पन्नः,महात्मनो वाणी कथं सर्वैरङ्गैः सत्या प्रमाणीभूता। किमिदं भगवतः कृपा,उत मम सौभाग्यम अथवा महात्मनः सिद्धिप्रभावः?......

मम विवाहस्तयैव कन्यया सह सम्पन्नः। मया बाढमवगतम्,यन्महात्मना कथितं दर्शितं च सर्वमक्षरशः सत्यमिति।

तन्नाल्पीयानप्यंशो न मिथ्याभूतः। कया शक्त्या केन बलेन महात्मनेदं कथितं दर्शितं चेति तु नाहं मनागपि जानामि, स महात्मा च न पुनर्मया दृष्टः। अन्विष्यापि न लब्धः। गङ्गातटं परित्यज्य गतस्य तस्य भूयान् कालोऽतीतः। ततः प्रभृति धर्मकर्मादेः पाखण्डताकथनं मया परित्यक्तम्। साधुषु महात्मसु च मम चेतसि श्रद्धा समुदभूत्। इदं च मयाऽवगतम् यदस्मिन् संसारे यद्यपि बहवः पाखण्डिनः सन्ति, तथाऽपि केऽपि विरलाः सत्यसिद्धा महात्मानोऽपि सन्ति। शास्त्रमीश्वरो धर्मकर्मादि च सर्वमपि यथार्थमस्ति।

कदाचिन्मेघश्यामः तां घटनामधिकृत्य मां पृच्छति—"किं रे ललित! अपि विश्वसिषीदानीं साधुमहात्मसिद्धेषु?"

अहमुत्तरयामि—"अवश्यं विश्वसिमि, यदि ते वास्तविका महात्मानो भवेयुः। कृतकसिद्धेषु तु न मे विश्वासः।"



## देवरथः

भाले द्वित्रा रेखाः, कृष्णपुत्तलिकानां समीपे स्थूलाः कृष्णाश्च वरुण्यः, घनाः परस्परं सन्नद्धा भ्रुकुट्यः, नासाऽधोवर्तिनी, अङ्कुरिता हरिताभा च तस्यास्तपस्विन्या गौरमुखे सबलामभिव्यक्तिप्रेरणां प्रकटयन्ति स्म। काषायवस्त्रै र्यौवनाच्छादनं कर्तुं न शक्यते। संसारं दुःखपूर्णं ज्ञात्वैव सा सङ्घस्य शरणमागताऽऽसीत्। तस्या आशापूर्णे हृदये कियन्त एवाघाता लग्ना आसन् यौवनेन तदापि संगो नात्याजि। भिक्षुणी भूत्वाऽपि सा शान्तिं नाप। अथ साऽत्यन्तमधैर्याऽऽसीत्।

आसीच्चैत्रामायाः प्रभातः। श्वेतमृत्तिकातुल्यासु शाखास्वश्वत्थवृक्षस्यारुणानि कोमलानि च पत्राण्यागतान्यासन्। तेषु प्राभातिकरश्मयः क्रीडन्ति स्म। ईदृशी स्निग्धा शरणा ताभिः काधिगताऽऽसीत्?

सुजाता चिन्तयति स्म। अमावस्या वर्तते। इयं तु तस्या हृदये प्रभातादेवान्धकारं पूरयति। दिवसस्यालोकस्तस्याः कृते नासीदिव। सा स्वकीयान् विशृङ्खलान् विचारान् विहाय कं पलायनं विदध्यात्? व्याधानां समूहे हन्त! एकाकिनी हरिणी! तस्या नयने निमीलिते आस्ताम्।

आर्यमित्रस्तस्थौ। तेन चिन्तितं यत् साम्प्रतं सुजातायाः समाधिभङ्गो न भविष्यति। स्मेरं चकार। तस्य कृत्रिमः शीलस्तं

वारयाञ्चकार। संघस्य निवासिभिस्तस्य हृदये कशाघातः कृतः किन्तु स भिक्षुकः स्वस्थानं न तत्याज।

अन्तस्तमसा व्याकुला सुजाता वाह्यलोकलाभाय नेत्रोन्मीलनं चकार। आर्यमित्रं सा ददर्श। आलोकस्य भयानकता तन्नेत्रयोः सम्मुखे नृत्यञ्चकार। शक्तिसञ्चयं कृत्वा सोक्तवती "वन्दे!"

आर्यमित्रः पुरुष आसीत्। श्रमणाभिर्भिक्षुकस्य नमस्कृतिः करणीयेत्यासीत् संघनियमः। हसताऽऽर्यमित्रेण नमस्कृतेरुत्तरमदायि, पप्रच्छ च सुजाते! त्वमद्य स्वस्थाऽसि किम्?

सुजाता उत्तरं दित्सतिस्म किन्त्वार्यमित्रस्य नवीने काषायवस्त्रे तस्या मनः संलग्नमासीत्। अयमितो गच्छेदिति सेच्छति स्म। न गच्छेत्ताच्चै तन्यतो दूरम्। अत्र सा शस्त्ररहिताऽऽसीत्। आर्यमित्रस्तस्यै ददाति स्मौषधम्। स आसीत् सङ्घस्य वैद्यः। सा स्वास्थ्यं लेभे। तस्यै नार्यमित्रस्यावश्यकता। परन्तु तस्या हृदयोपचार आवश्यको वर्तते। सोक्तवती—

आम्! स्वस्थाऽस्मि।

अधुनाऽपि पथ्यसेवनमावश्यकम्।

बाढम्।

एकाऽन्याप्यस्ति वक्तव्या वार्ता।

किम्? कथ्यताम्। भवता कदा प्रव्रज्याऽऽदत्ता?

एतदाकर्ण्य किं करिष्यसि ? संसार एव दुःखमयः ।

सत्यम्, बाढम् ! नमस्कृतिः ।

आर्यमित्रो जगाम किन्तु पश्चाद् यदान्दोलनमालोकतरंगेषूत्थितमभूत् सा तस्मिन्नेवान्दोलिताऽभूत । सा न ज्ञातवती यन्महास्थविरः कियतः कालादत्र स्थितो वर्तते ।

( २ )

समुद्रस्य कोलाहलो वार्ताश्रवणं वारयति स्म । शनैः शनैः सन्ध्याविस्तृतायां नीलजलराशौ अवतरति स्म । तरंगेषु पतितास्तरङ्गाश्च चूर्णिता भवन्ति स्म । सुजाता वालुकाया वेद्यां स्थिता विस्फारितनेत्रैस्तस्या चणिकताया अनुभवं करोति स्म किन्तु नीलाम्बुधेर्महासम्भारः कस्याश्चिद् वास्तविकताया दिशि संकेतं करोति स्म । सत्तायाः सम्पूर्णता सन्ध्यायां मूर्तिमती भवति स्म । सुजाता सहसोक्तवती—

जीवनं सत्यम्, सम्वेदनं सत्यम्, आत्मन आलोकेऽन्धकारः कश्चित्पदार्थो नास्ति ।

सुजाते ! किमित्युच्यते ? इति पश्चादागतेनार्यमित्रेणोक्तम् ।

कः, आर्यमित्र !

किमर्थमहमभूवं भिक्षुकी आर्यमित्र !

सुजाते ! व्यर्थम् । अमावास्याया गम्भीररजन्यां संवत्स

सम्मुखे मया स्वकीयः पापः स्वीकृतः। स्वकर्त्तिमावरणे स्वं सुरक्षितं रक्षितुं नाहमशकम्। मया महास्थविरः प्रोक्तो यत् संघमित्रस्य पुत्र आर्यमित्रः सांसारिकविभतीनामुपेक्षां कर्तुं न शक्नोति। कैश्चिन पुरुषैः सञ्चिता महौषध्यः, कलिङ्गराजवैद्यपदसम्मानं, सहजतयैवत्यक्तुं न शक्यते। केवलं सुजातायै भिक्षु कोऽहमभवम्। तस्या एवान्वेषणायाहमागतोऽस्मिन् नीलविहारे। साऽस्ति मदीया वाग्दत्ता पत्नी।

किन्तु आर्यमित्र! विलम्बः कृतः। नाहं त्वदीया पत्नी भविष्यामि। —सुजाता मध्य एवोक्तवती।

सुजाते किमिति? इदं काषायवस्त्रं शृंखला नास्ति। त्यक्ष्यतामेतत्। नारायण्याः स्वर्णमण्डिनानि वस्त्राण्येव तवोपयुक्तानि। रत्नमाला, मणिकङ्कणे, हेमकांची च त्वदीयां कोमलाङ्गलतामलंकरिष्यन्ति। त्वं राज्ञो राज्ञी भविष्यसि।

किन्तु—

किन्तु किं सुजाते! मदीयं हृदयं स्फुटति। मया संघस्य वन्धनं छिन्नं कृतम्। त्वयाऽपि तु जीवनस्यात्मनश्च क्षणिकतायां विश्वासो न क्रियते।

किन्तु, आर्यमित्र! अहं तममूल्यमुपहारं यं स्त्रियः कुलवध्वश्च स्वपत्युश्चरणकमलयोः समर्पयन्ति—कुत आनेष्यामि? तां वरमालां यस्यां दूर्वासदृशं कौमार्यं हरितं—पूरितं भवति,

यस्यां मधूककुसुमसदृशो हृदयरसः पूरितो भवति—कथं, कुत आनीय तावकीने कण्ठेऽर्पयिष्यामि ?

सुजाते ! तत्र का बाधा ? इत्युच्चरत आर्यमित्रस्य कण्ठध्वनिः किञ्चित्तीव्रोऽभूत । स अङ्गुष्ठैर्वालुकाखननञ्चकार ।

तामकर्ण्य त्वं किङ्करिष्यसि? गच्छ, राजसुखोपभोगं कुरु । जन्मदुःखिताया मे पृष्ठे स्वकीयं जीवनं विनष्टं न क्रियताम् त्वया सम्बन्धनं त्रोटितं तदा मे मोहबन्धनच्छेदोऽपि करणीयः ।

सुजाताया वक्षःस्थले श्वासः पूरितो भवति स्म ।

निर्जनसमुद्रतटस्य तस्मिन् मलिने सायंकाले सुजातायाः करग्रहणं कृत्वाऽऽर्यमित्रस्तीव्रेण स्वरेण पप्रच्छ—सुजाते ! स्पष्टं ब्रूहि किं त्वं मयि प्रेम न करोषि ?

करोम्यार्यमित्र ! इदमेवास्ति दुःखम । अन्यथा भैरव्याः कृते कस्योपभोगस्य नैयून्यं वर्तते ?

आर्यमित्रश्चकितो भूत्वा सुजाताया हस्तं त्यक्त्वा कथितवान् किमुच्यते त्वया ? भैरवी !

आम् , आर्यमित्र ! अहमस्मि भैरवी ।

साऽग्रे वक्तुं न शशाक । नेत्राभ्यां जलबिन्दवः पतन्ति स्म येषु वेदनायाः समुद्रो भवतिस्मोर्मिलः । आर्यमित्रोऽधीरो भूत्वा विचारयामास—पारिवारिकानि पवित्रबन्धनानि विच्छिद्य यस्मान्मुक्तेर्निर्वाणस्याशायां जनता धावमाना वर्तते किं तस्य धर्मस्थेयमेव मर्यादा अयमन्धकारः—गृहस्थानां सुखानि दृष्टम-

असमर्थानामयं निर्ममो दण्डः समाजेन कियदवधि भोक्तुं शक्यते ? सहसा प्रकृतिस्थो भूत्वा स उवाच—

सुजाते ! मदीयं मस्तिष्कं परिभ्रमति यथा देवरथस्य चक्रम् किन्त्वहं त्वामधुनाऽपि पत्नीत्वे ग्रहीष्यामि । चल ।

किन्तु त्वामहं तु पतित्वे न ग्रहीष्यामि । स्वकीयं समस्तं लांछनं त्वयि संस्थाप्य जीवनसहचरीभावप्राप्त्यै नाऽहं दुःसाहसं कर्तुं शक्नोमि आर्य्यमित्र ! मह्यं क्षमा देया । मदीया वेदना रजनीतोऽपि कृष्णा, दुःखसमुद्रादप्यनन्ता । स्मरणमस्ति अस्यैव महोदधेस्तटे स्थित्वा सिकतासु स्वनामाङ्कनं वयमकुर्वन् । चिररोदनकारी निष्ठुरः समुद्रः स्ववीच्यङ्गुलिभिस्तद्विलयं करोति स्म । नर्वविलयं हृदयसिकतायाः प्रेम्णो नाम । आर्यमित्र ! अस्या रजन्या अन्धकारे तद्विलयं मा वारय ।

सुजाते !— सहसैकः कठोरः शब्दः श्रुतः । उभौ ददर्शतुः, अन्धकारवद्भीषणमूर्तिं, संघस्थविरम् ।

( ३ )

तस्या जीवनपरमाणवो विकम्पिता भवन्ति स्म । निशायाः कृष्णतायां नतमस्तका सुजाता स्थिता देवप्रतिमाया रथयात्रासम्भारं पश्यति स्म, किन्तु धावमानं, विलुप्तं, मूकस्वप्नमिव सर्वमवलोक्यापि किञ्चिद् ज्ञातुं न शक्नोति स्म । स्थविरेणागत्योक्तं—

सुजाते ! त्वया प्रायश्चित्तं कृतम् ?

कस्य पापः प्रायश्चित्तार्हः ? तावकीनो वा मामकीनः ?—तीव्रस्वरे सुजातयोक्तम् ।

स्वकीयस्यार्यमित्रस्य च पाप्मनां प्रायश्चित्त आवश्यकः । सुजाते ! त्वयाऽविश्वासिनो हृदयाद् धर्मद्रोहः कृतः ।

धर्मद्रोहः ? आश्चर्यम् ।

त्वदीयं शरीरं देवतायै समर्पितमासीत, सुजाते !

मध्य एव तं विनिवार्य तीव्रस्वरे सुजातोक्तवती—मौनं माकलय । असत्यवादिन् ! वज्रयानिन् ! नरपिशाच !!

एकक्षण एव तस्य भयानक—मनुष्यस्य कृत्रिमशान्तिरभूद्विलीना । स दन्तसङ्घर्षणं कृत्वा कथितवान् "मृत्युदण्डः" ।

सुजाता तमवलोक्योक्तवती—कठिनातिकठिनोऽपि मृत्युर्मदर्थं कोमलो वर्तते । मदर्थमस्यां स्नेहमय्यां धरण्यां किमवाशिष्टं वर्तते । स्थविर ! त्वदीयं धर्मशासनं गृहाणि संचूर्ण्य विहाराणां सृष्टिं करोति—कुचक्रे जीवान् पातयति । पवित्रगार्हस्थ्यबन्धनान्याच्छिद्य यूयमपि स्ववासनातृप्तेरनुकूलं नवीनमेकं गृहं रचयन्ति, यस्य नाम्नि केवलं परिवर्तनं भवति । युष्माकं तृष्णा तु साधारणान् सरलान् जनानप्याक्रम्य वर्तते याऽतिक्षुद्रा; निम्नकोटिका च ।

किन्तु सुजाते ! तावकीनं मरणं निश्चितम् ।

मरिष्यामि स्थविर ! किन्तु तावकीनोऽयं कल्पित आड-म्बरपूर्णो धर्मोऽपि मरिष्यति । मनुष्यताया नाशं कृत्वा कश्चि-दपि धर्मः स्थातुं न शक्नोति ।

प्रभात एव ।

आम् ! प्रभात एव त्वं द्रक्ष्यसि यत् सुजाता कथं मरति ।

( ४ )

सुजाता मन्दिरस्य विशालस्तम्भे विलग्ना रात्रिव्यापिनमु-त्सवं स्थिरदृष्ट्या ददर्श । एकदा सा शनैः पप्रच्छ—देवते ! किमर्थमयमुत्सवः ! किं जीवनयन्त्रणाभिस्तव पूजनोपकरणानि संगृहीतानि भवन्ति ?

प्रतिमा नोत्तरमदात् ।

प्रभातस्य किरणमाला मन्दिरस्य शिखरे हास्यं चकार ।

देवप्रतिमा रथयात्रायै प्रयाणं चकार । जनता तुमुलैर्निना-दैर्जयघोषश्चकार । सुजाता पूजाया मध्ये कौशेयवसनमुपनिधा-य भक्तिभावेन गच्छन्तमार्यमित्रं ददर्श । तस्येच्छाऽभूद् यदा-र्यमित्रमाहूय वदेद् यदहं त्वया सह गमनाय प्रस्तुताऽस्मि । स म्पूर्णबलमेकत्रीकृत्य सोक्तवती—आर्यमित्र !

किन्त्वस्मिन् । कोलाहले कः शृणोति भयकम्पितं स्खलद् वचनम् ! देवरथो विस्तीर्णे राजमार्गे गच्छति स्म । तस्य सह

ढानि चक्राणि पृथिव्यां वक्षःस्थले गाढां रेखामाकृष्य पुरस्सराणि भवन्ति स्म । तस्मिन् जनसमुदाये सुजाता सहसा प्रविश्यैकस्मिन्नेव क्षणे देवरथस्य भीषणचक्राणामधस्तले पतित्वा चूर्णिताऽभूत् ।

रथस्तथौ स्थविरः स्थिरदृष्ट्या सुजातायाः शवं ददर्श। अयं किञ्चिद्विलम्बितस्यैव साम्प्रतमेव अर्चकाणां समुदायः "कालापहाड़, कालापहाड़" इत्युच्चरन्नितस्ततः पलायनञ्चकार । धूलिघटासु खड्गानां विद्युतः प्रकाशश्चक्रुः ! देवप्रतिमा धर्मोन्मत्तस्य कालापहाड़स्याश्वारोहिभिराकीर्णाऽभूत् । रथे देवप्रतिमाऽऽसीत्तदधस्तले सुजातायाः शवः ।



